अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९२.

श्रीसेतुलक्ष्मीप्रसादमाला ।

ग्रन्थाङ्कः ५.

# रसोपनिषत्

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधिता ।

सा च

अनन्तशयने

महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशिता ।

कोलम्बाब्दाः ११०३, क्रैस्ताब्दाः १९२८.

# PREFACE.

Rasopaniṣat is a rare treatise on the virtues of *Rasa* (Mercury). If it is a revelation as its name would import, we know nothing of the Ṛṣi to whom it was revealed, or of its author if it is the work of man. In so far as it is written in the form of a narrative by God Parameśvara to his spouse Pārvatī, the work resembles the Purāṇas. It is regarded with the respect and veneration due to the Upaniṣats as is evident from its title Rasopaniṣat. From the colophons at the end of each chapter 'इति महोदधौ रसोपनिषदि' as well as that which is found at the close of the 18th chapter, 'समाप्ता चेयं रसोपनिषत्' the present work appears to be a part in 18 chapters of a larger work named Mahodadhi. The first chapter of the work begins with an introduction wherein are mentioned the four Anubandhas:—

"श्रीमतां महतां पुंसां त्रिवर्गस्वर्गभाविनाम् ।
राज्ञां च विजिगीषूणां प्रजानिर्वाधकारिणाम् ॥
धर्मार्थमुपभोगानां नष्टराज्यविवृद्धये ।
आयुर्यौवनलाभार्थं मुक्त्यर्थं च मुमुक्षुणाम् ॥
पारतीयस्य दिव्यस्य रसेन्द्रस्यामितौजसः ।
शास्त्रं च लक्षणोपेतं दृष्टादृष्टानुसारि यत् ॥
यत् सारं सर्वलोकेषु नवनीतमिवोद्धृतम् ।
तदिदं स्वर्ग्यमायुष्यं यशस्यं धन्यमक्षयम् ॥
विचित्रं विस्मयं सूक्ष्मं परं विश्वस्य साधनम् ।
अनेकलक्षणोपेतं युक्तिमद् व्यक्तनिर्णयम् ॥"

(p. 1, Ślo. 4—8)

and the subjects to be dealt with in the various chapters are then enumerated as follows:—

"सङ्ग्रहं संप्रवक्ष्यामि यथावदनुपूर्वशः ।
शोधनं तेजनं चैव पाचनं द्रावणं तथा ॥
चारणं पातनं चेति रसकर्म तु षड्विधम् ।
निग्रहो बन्धनं चाम्रावकुक्कुटस्तदनन्तरम् ॥
पक्षच्छेदकरं चैव वह्निकर्म रसक्रिया ।
रञ्जनं क्रामणं चैव सारणं प्रतिसारणम् ॥
तत्र [illegible] प्रथमेऽध्याय उच्यते ।
[illegible]"

(p. 2, Ślo. 20—22½)

But here a curious phenomenon engages our attention. After the subjects of the 18 chapters found in the text are mentioned, we find another 18th chapter and its contents mentioned. Next are enumerated the subjects of 6 chapters numbered from 24 to 29 with no mention at all of any chapter from 19 to 23 thus,

"एवमेत्र चतुर्विंशे प्रोक्ता सोपानिषत् तथा ॥
पञ्चविंशतिकेऽध्याये गुह्यमुक्तं महोदधौ ।
उत्पत्तिं गुरुपूजां च षड्विंशत्यां मयानघे ! ॥
सप्तविंशतिकेऽध्याये पूजालक्षणमुच्यते ।
अष्टाविंशतिकेऽध्याये कर्मकारस्य लक्षणम् ॥
आचार्यस्य च सर्वत्र लक्षणानि वदाम्यहम् ।
ऊनत्रिंशतिकेऽध्याये जापितं प्रोच्यते मया ॥
इत्येवं मार्गतो द्रष्टुमनुमुक्तं महर्षिभिः ।
क्रियापथमथोवाच पारम्पर्योपदेशतः ॥"

(p. 5, Slo. 55—9)

Here it appears that the contents of a few chapters of some similar treatises are inserted here. Whether the chapters are those of the work Mahodadhi itself can be ascertained only after recovery of a complete copy thereof. The work is divided into 18 chapters dealing with the following subjects:—

| | | | |
|---|---|---|---|
| 1 | करणबन्धः. | 10. | नागसङ्क्रमणः. |
| 2. | रसवृद्धिकरणम्. | 11. | तारोत्कर्षविधानः. |
| 3. | स्पर्शवृद्धिकरणम्. | 12. | शुल्बारकालिकाच्छेदः. |
| 4. | बीजविधानम्. | 13. | वङ्गस्तम्भशोधनम्. |
| 5. | वेधपट्टः. | 14. | शोधनविधिः. |
| 6. | लोहकरणम्. | 15. | अभ्रकद्रावका(धिकरणम्). |
| 7. | रञ्जनकल्कविधिः. | 16. | द्रावणा(धिकारः). |
| 8. | गोलकविधानम्. | 17. | गुह्यबन्धः. |
| 9. | ओषधिबन्धनम्. | 18. | रसकरणबन्धसन्न्यासविधानः. |

As the work is a summary of many ancient treatises as is evident from the verse

"प्राभृते वातुले ब्राह्मे वैष्णवेन्द्रे च शाङ्करे ।
बृहस्पतिमते शौक्रे यत् सारं तदिहोच्यते ॥"

(p. 2, Slo. 14)

it may be regarded as an authoritative work on the school; and it is also an improvement on the ancient systems in as much as it professes to follow the school of Nâgârjuna.

"नागार्जुनमुनिः श्रीमान् दृष्टयोगमिदं परम्।"

(p. 76, Slo. 10)

There are a few solecisms such as मुमुक्षुणाम् (p. 1, Slo. 5) दृश्यति (p. 57, Slo. 14) and इमैः (p. 63, Slo. 101) which, I think, are due either to the fact that the author was not highly solicitous in regard to the accuracy of the language, or that the work was written at a time when such usages were current coins of the Sanskrit language.

This edition is based on two manuscripts. The first marked (क) was an incomplete copy obtained from the library of Thirunakkara Swamiyar Matom, Kottayam, while the second was an exceedingly worn out manuscript lent by Mr. Vayaskara Narayanan Moossu, Kottayam. None of these manuscripts is correct and complete: however. considering the great value of the work, it is issued in the Trivandrum Sanskrit Series.

Trivandrum,
24-8-103.

K. SAMBASIVA SASTRI.

# उपोद्घातः ।

---

असौ रसोपनिषन्नाम कोऽप्यपूर्वः पारतीयरसनिरूपणपरो निबन्धः । अस्य द्रष्टा ऋषिः कर्ता वा आचार्यः क इति नावगम्यते । परमेश्वरेण पार्वत्यै बोध्यमानां कामपि परकथनपद्धतिमनुसृत्य निबद्धोऽयं प्रायः पुराणच्छायमवलम्बते । उपनिषदुत्तरमिदं रसोपनिषदिति नामधेयं प्रतिपाद्यवस्तुनस्तत्तादृशं महिमानमनुपुष्णदस्य रसरहस्यनिबन्धस्यौपनिषदीं प्रामाण्यस्थितिं प्रबलयति । तत्तदध्यायपरिसमाप्तिगतेन — 'इति महोदधौ रसोपनिषदि ............' इति, विशिष्य चाष्टादशाध्यायपरिसमाप्तिगतेन — 'समाप्ता चेयं रसोपनिषद्' इति च भागाभ्याम् अयं महोदधिनाम्नः कस्यापि रसविषयस्य महानिबन्धस्यावान्तरभूतोऽष्टादशाध्यायीपरिमितो ज्ञायते । अत्र च प्रथमेऽध्याये भङ्ग्यन्तरेण —

"श्रीमतां महतां पुंसां त्रिवर्गस्वर्गभाविनाम् ।
राज्ञां च विजिगीषूणां प्रजानिर्बाधकारिणाम् ॥ ४ ॥
धर्मार्थमुपभोगानां नष्टराज्यविवृद्धये ।
आयुर्यौवनलाभार्थं मुक्त्यर्थं च मुमुक्षुणाम् ॥ ५ ॥
पारतीयस्य दिव्यस्य रसेन्द्रस्यामितौजसः ।
शास्त्रं च लक्षणोपेतं दृष्टादृष्टानुसारि यत् ॥ ६ ॥
यत् सारं सर्वलोकेषु नवनीतमिवोद्धृतम् ।
तदिदं स्वर्ग्यमायुष्यं यशस्यं धन्यमक्षयम् ॥ ७ ॥
विचित्रं विस्मयं सूक्ष्मं परं विश्वस्य साधनम् ।
अनेकलक्षणोपेतं युक्तिमद् व्यक्तनिर्णयम् ॥ ८ ॥"

इत्यनुबन्धचतुष्टयमुक्त्वा, तत्तदध्यायप्रतिपाद्यं

"सङ्ग्रहं सम्प्रवक्ष्यामि यथावदनुपूर्वशः ।
शोधनं तेजनं चैव पाचनं दाशनं तथा ॥ २० ॥

चारणं पातनं चेति रसकर्म तु षड्विधम् ।
निग्रहो बन्धनं चाग्नावङ्कुशस्तदनन्तरम् ॥ २१ ॥
पक्षच्छेदकरं चैव वह्निकर्म रसक्रिया ।
रञ्जनं क्रामणं चैव सारणं प्रतिसारणम् ॥ २२ ॥
तत्सङ्करणबन्धश्च प्रथमेऽध्याय उच्यते ॥ २२½ ॥"

इत्यादिना मङ्गलकृता कोऽप्युपोद्घातमार्गोऽनुसृतः प्रतीयते । किन्तु किञ्चि-दिदमत्र सद्यः संप्रधारणानर्हं ग्रन्थस्य सम्पूर्णस्योपलम्भं यावत् पर्यालोचना-मात्रेण विश्रमयितव्यमास्ते यद्—अयं निबन्धः प्रथमेऽध्याये

"ततस्त्वष्टादशेऽध्याये मन्न्यासविधिरुत्तमः ।" (पृ० ४. श्लो० ४६)

इत्युपक्रम्य

"शोधनं पातनं द्रावं त्रिविधं जातलक्षणम् ।"(पृ० ५. श्लो० ५४)

इत्यन्तमुक्त्वा

"ततस्त्वष्टादशेऽध्याये कथितं सूतसङ्ग्रहम् ।" (पृ० ५. श्लो० ५४½)

इति पुनरप्यष्टादशाध्यायविषयसङ्ग्रहमारभमाणो मध्य एकोनविंशात् त्रयोविंशं यावदध्यायपञ्चकमुज्झित्वा समनन्तरमेव

"एवमेव चतुर्विंशे प्रोक्ता सोपनिषत् तथा ॥ ५५ ॥
पञ्चविंशतिकेऽध्याये गुह्यमुक्तं महोदधौ ।
उत्पत्तिं गुरुपूजां च षड्विंशत्यां मयानघे! ॥ ५६ ॥
सप्तविंशतिकेऽध्याये पूजालक्षणमुच्यते ।
अष्टाविंशतिकेऽध्याये कर्मकारस्य लक्षणम् ॥ ५७ ॥
आचार्यस्य च सर्वत्र लक्षणानि वदाम्यहम् ।
ऊनत्रिंशतिकेऽध्याये जापितं प्रोच्यते मया ॥ ५८ ॥
इत्येवं मार्गतो द्रष्टुमनुभुक्तं महर्षिभिः ।
क्रियापथमथोवाच पारम्पर्योपदेशतः ॥ ५९ ॥"

इति यथाक्रममेकोनत्रिंशाध्यायावधि विषयसङ्ग्रहमारचयन् क्रियापथवचनेन त-मिममुपोद्घातमार्गमुपसंहरंश्चान्तरा कस्यचन खिलस्य निबन्धान्तरस्य विषय-सङ्ग्रहैः सम्पुटित इव लक्ष्यते, तत् किं निबन्धान्तरं महोदधिरेव स्यादु-ताहो तद्भिन्नम् इति ।

प्रत्यध्यायमन्ततो दृश्यमानाद् 'इति ..................करणबन्धो नाम प्रथमोऽध्यायः' इत्यध्यायनामनिर्देशघटितात् परिसमाप्तिप्रतिज्ञावाक्यात सूत्रशः सङ्गृह्य प्रतिपाद्यसारमधो दर्शयिष्यमाणया दिशाष्टादशधा विभज्य निर्दिष्टमिव प्रतिभाति । यथा —

| अध्यायसङ्ख्या. | नामधेयं प्रतिपाद्यसारञ्च. |
|---|---|
| १ | करणबन्धः. |
| २ | रसवृद्धिकरणम्. |
| ३ | स्पर्शवृद्धिकरणम्. |
| ४ | बीजविधानम्. |
| ५ | वेधपट्टः. |
| ६ | लोहकरणम्. |
| ७ | रञ्जनकल्कविधिः. |
| ८ | गोलकविधानः. |
| ९ | ओषधिबन्धनम्. |
| १० | नागसङ्क्रमणः. |
| ११ | तारोत्कर्षविधानः. |
| १२ | शुल्बारकालिकाच्छेदः. |
| १३ | वङ्गस्तम्भशोधनम्. |
| १४ | शोधनविधिः. |
| १५ | अभ्रकद्रावकाधिकरणम्. |
| १६ | द्रावकाधिकारः. |
| १७ | गुह्यबन्धः. |
| १८ | रसकरणबन्धसन्न्यासविधानः. |

"प्राभृते वातुले ब्राह्मे वैष्णवैन्द्रे च शाङ्करे ।
बृहस्पतिमते शौके यत् सारं तदिहोच्यते ॥" (पृ० २. श्लो० १४)

इत्यनेन प्रामाणिकप्राचीनतन्त्रसारभूतत्वादस्य समूलत्वं,

"नागार्जुनमुनिः श्रीमान् दृष्टयोगमिदं परम् ।"

(पृ० ७६. श्लो० १०)

इत्यनेन तदपेक्षयार्वाचीनमताभ्युपगमात् परिष्कृतत्वं च सिध्यति ।

| | | | |
|---|---|---|---|
| मुमुक्षुणाम् | (पृष्ठम्. १. | श्लोकसङ्ख्या. | ५) |
| दृश्यति | (,, ५७. | ,, | १४) |
| इमैः | (,, ६३. | ,, | १०१) |

इत्यादयो नैके संस्कृतेतर शब्दा इह पङ्क्तिप्रविष्टा निबन्धकर्तुरस्य विवक्षितार्थ-घटनामात्रदृष्टिमाहोस्वित् तावत् स्वातन्त्र्यमभिनिविष्टाया गैर्वाण्याः सञ्चारसमये निबन्धस्यास्याविर्भावमाविष्कर्तुमलम् ।

एतत्संशोधनाधारभूतावादर्शौ द्वौ ।

तयोः क- संज्ञितः **कोट्टयं तिरुनक्करस्वामियार्**सम्बन्धी असमग्रः ।

अन्यः **कोट्टयं वयक्कर आर्यनारायणमूस्सतु**स्वामिकः समग्रोऽति-जीर्णत्रुटितबहुपत्रः ।

परिशुद्धस्य समग्रस्य चादर्शान्तरस्यानुपलम्भेऽपि विषयगौरवादनुपेक्ष-णीयोऽयं विलम्बमसहमानैरस्माभिरितः प्रकाश्य सज्जनसमक्षमवतार्यते ।

अनन्तशयनम्,
२४-८-१०३.

**के. साम्बशिवशास्त्री.**

श्रीपद्मनाभसेवि-
न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे
प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसहितसेतुलक्ष्मी-
प्रसादमाला सुवर्णमणिचित्रा ॥

॥ श्रीः ॥

# रसोपनिषत् ।

---

प्रणिपत्य महादेवं स(र्वज्ञं) सर्वदर्शिनम् ।
प्र(ण? ल)यस्थितिसर्गाणां लोकानामादिकारणम् ॥ १ ॥

प्रणम्य च महाभूतं महर्षिगणसेवितम् ।
उवाच पार्वती देवी कारणं प्रभुमव्ययम् ॥ २ ॥

रसोपनिषदं दि(व्यं? व्यां) वक्तुमर्हसि मे प्रभो! ।
इत्येवमुक्तः पार्वत्या देवो वचनमब्रवीत् ॥ ३ ॥

श्रीमतां महतां पुंसां त्रिवर्गस्वर्गभाविनाम् ।
राज्ञां च विजिगीषूणां प्रजानिर्बाधकारिणाम् ॥ ४ ॥

धर्मार्थसुपभोगानां नष्टराज्यविवृद्धये ।
आयुर्यौवनला(भा)र्थं मुक्त्यर्थं च मुमुक्षुणाम् ॥ ५ ॥

पारतीयस्य दिव्यस्य रसेन्द्रस्यामितौजसः ।
शास्त्रं च लक्षणोपेतं दृष्टादृष्टानुसारि यत् ॥ ६ ॥

यत् सारं सर्वलोकेषु नवनीतमिवोद्धृतम् ।
तदिदं स्वर्ग्यमायुष्यं यशस्यं धन्यमक्षयम् ॥ ७ ॥

विचित्रं विस्मयं सूक्ष्मं परं विश्वस्य साधनम् ।
अनेकलक्षणोपेतं युक्तिमद् व्यक्तनिर्णयम् ॥ ८ ॥

देवि! देवगणैर्युक्ता शृणु मत्तो महोदधिम् ।
भामण्डलमिव ध्वान्तं निरुणद्ध्यहि(ताय किम्? तानि यत्) ॥

देयमेतत् सुपुत्राय शिष्याय च महात्मने ।
ऊहापोहसमर्थाय दक्षाय हितकारिणे ॥ १० ॥

नापुत्राय प्रदातव्यं नाशिष्याय कदाचन ।
नायोग्याय च दातव्यं दातुः प्रेतपुरं गतिः ॥ ११ ॥

पापिष्ठाय कृतघ्नाय यदि दास्यति कारणात् ।
नच सिद्धिमवाप्नोति देवताश्च शपन्ति च ॥ १२ ॥

येन लब्धमिदं शास्त्रं रसकर्म तु निश्चितम् ।
तेन लब्धमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ १३ ॥

प्राभृते वातुले ब्राह्मे वैष्णवैन्द्रे च शाङ्करे ।
बृहस्पतिमते शौक्रे यत् सारं तदिहोच्यते ॥ १४ ॥

पारतीयेन बद्धेन रसेनाकुष्टकर्मणा ।
अर्थो धर्मानुबद्धः स्यादक्षयस्य महोदयः ॥ १५ ॥

सौरूप्यं नित्यतारुण्यमारोग्यमतुलं बलम् ।
दिव्ययोगसमायोगैः सर्वांश्चा(नु ? नू )त्तरोत्तरान् * ॥ १६ ॥

दीर्घं जीवितमन्विच्छन् स भवेदजरामरः ।
पारतीये रसे तस्माद् बन्धनं रञ्जनं परम् ॥ १७ ॥

क्रामणं च प्रकुर्वाणः स च दिव्यो न मानुषः ।
पुष्कलं विधिमारभ्य शास्त्रमार्गेण यत्नतः ॥ १८ ॥

प्रकुर्याद् बन्धनं तस्मात् सिद्धिमाप्नोति केवलाम् ।
(य ? इ)तस्ततः प्रकीर्णस्य शास्त्रस्यास्य समासतः ॥ १९ ॥

सङ्ग्रहं सम्प्रवक्ष्यामि यथावदनुपूर्वशः ।
शोधनं तेजनं चैव पाचनं दाशनं तथा ॥ २० ॥

चारणं पातनं चेति रसकर्म तु षड्विधम् ।
निग्रहो बन्धनं चाग्रावङ्कुशस्तदनन्तरम् ॥ २१ ॥

पक्षच्छेदकरं चैव वह्निकर्म रसक्रिया ।
रञ्जनं क्रामणं चैव सारणं प्रतिसारणम् ॥ २२ ॥

तत्सङ्करणबन्धश्च प्रथमेऽध्याय उच्यते ।
द्वितीये रसधेन्वाख्ये प्रोक्तं + + + + + + ॥ २३ ॥

---

* 'प्राप्नोती'ति शेषः ।

बन्धस्य सन्निधानं च द्रावणं बन्धनक्रिया ।
तृतीयेऽङ्कुशबन्ध ++ हाङ्कुशनिपातनम् ॥ २४ ॥
निक्षेपस्थैर्यकरणं वृद्धिं च स्पर्शवेधिनः ।
ततो बीजविधानं तु चतुर्थे बीजसङ्ग्रहः ॥ २५ ॥
रसलोहादिवर्गाणां निर्दिष्टो दीपिकाविधिः ।
पञ्चमे वेधकः षष्ठो रसः षष्ठे निगद्यते ॥ २६ ॥
++ नां लोहकरणं रसकादिनिपातनम् ।
पक्षच्छेदकरे कल्के सप्तमे लोहरञ्जनम् ॥ २७ ॥
बीजद्रविणयोगं च हस्ते चाङ्गुष्ठपीडनात् ।
विडाद्यञ्जनकृष्टिं च रसोच्छिष्टक्रियास्तथा ॥ २८ ॥
गोलकद्वयमाख्यात(मष्ट)मे हेमतारयोः ।
औषधैरेव नवमे रसबन्धनमुच्यते ॥ २९ ॥
बीजरञ्जनमप्येव दशमे नागसंक्रमः ।
तारोत्कर्षविधानं च षड्विधं कूर्पमेव च ॥ ३० ॥
विडं चैकादशे प्रोक्तं हेमकर्मप्रबोधनम् ।
शुल्बारकालिकाच्छेदो द्वादशे परिकीर्त्यते ॥ ३१ ॥
मेलनं च यथायोगं शुद्धयोरङ्गयोस्तयोः ।
त्रयोदशे तु विज्ञेयं वङ्गस्तम्भनशोधनम् ॥ ३२ ॥
वङ्गाभ्रमेलनं चैव मेलितस्य यथाविधि ।
धातूनामपि सर्वेषां शोधनं पक्षघातनम् ॥ ३३ ॥
भावनं च क्रियाः क्षुद्रा गर्भाश्च गुलिकास्तथा ।
कृषिशुल्वविधानं च लोहषाड्गुण्यमेव च ॥ ३४ ॥
मूषाङ्गारविकल्पं च विजानीयाच्चतुर्दशे ।
अभ्रकद्रावणं दिव्यं ततः पञ्चदशेऽपि च ॥ ३५ ॥
तैलवर्गाश्च विविधानभ्रचारणजारणे ।
कालं च रसदोषांश्च विद्यादग्नौ बलाबलम् ॥ ३६ ॥
रसबन्धनबीजानां वेधकं च विशेषतः ।
चीर्णावस्थाश्च दोषांश्च जानीयादभ्रचारणे ॥ ३७ ॥

पलाशनप्रकारं च जीर्णाजीर्णस्य लक्षणम् ।
निर्मुखं सम्मुखं चापि सारणं सनियामकम् ॥ ३८ ॥

द्रावणादिप्रयोगेषु विडानि च सुरास्तथा ।
अतः षोडशकेऽध्याये यथावदनुकीर्त्यते ॥ ३९ ॥

सर्वेषामेव धातूनां द्रावणाविधिरुत्तमः ।
अतः सप्तदशे श्रेष्ठे गुह्यबन्धनमुद्दिशेत् ॥ ४० ॥

रसोपयोगः कल्याणः कल्याणारम्भ एव च ।
शालयस्त्रिविधा अत्र मूलीनां लक्षणानि च ॥ ४१ ॥

क्रियाश्च विविधास्तासां स्थानं कालं बलाबलम् ।
गवेषणं च कर्माणि प्रमाणं जीर्णाजीर्णयोः ॥ ४२ ॥

वर्णान्तरविभक्तिश्च ज्येष्ठमध्यमसाधनम् ।
वाल्यं रसस्य कौमारं यौवनं चोत्तरं वयः ॥ ४३ ॥

तथा कर्मप्रयोगं च नालिकां च रसं स्थितम्(?) ।
जारणं रसपिण्डस्य त्रिकम्बं (का? ता)प्रमेलनम् ॥ ४४ ॥

शोधनं वङ्गबीजस्य रसलोहक्रियाविधिम् ।
देववैक्रून्तवज्राणि[1] द्रावणं रसपिण्डयोः ॥ ४५ ॥

धूमवेधी रसश्चापि तस्मिन्नेवोपदिश्यते । म् ।
ततस्त्वष्टादशेऽध्याये सन्न्यासविधिरुत्तमः ॥ ४६ ॥

कथ्यते वनमाला च वर्णिता रसबन्धने ।
ततः कालविभागेन सम्प्रमाणगुणक्रमम् ॥ ४७ ॥

सूक्ष्मं सुव्यक्तमव्यक्तं व्यक्तं चाभ्रकचारणम् ।
दाशपाशनवर्गाणि मूलीनां रञ्जनं तथा ॥ ४८ ॥

दीपनं छेदनं चैव क्रामणं द्रावणं तथा ।
रञ्जनं च रसेन्द्रस्य सारणे द्रावणं पुनः ॥ ४९ ॥

लोहाभ्ररसधातूनां समसन्द्रावणं पुनः ।
ततो रसोत्तरं विद्याद् बीजोत्तरमतः परम् ॥ ५० ॥

---

१. 'वर्गयोः' क. पाठः.

तथोत्तरविडं चापि चारणं रसरञ्जनम् ।
क्षेत्रीकरणमप्युक्तं वेधकं चूर्णमेव च ॥ ५१ ॥

अग्निजारुविधिस्तस्माद् दाशपाशनरञ्जनम् ।
नागवङ्गायसं चूर्णं नागक्रान्तिविशोधनम् ॥ ५२ ॥

तैलस्रावणयोगं च वज्रपट्टो महारसः ।
सत्त्वपातनकत्वं च तथा पञ्चकिटिः पुनः ॥ ५३ ॥

विकुर्वतो रसेन्द्रस्य दृष्टस्यापि भिषग्विधः (?) ।
शोधनं पातनं द्रावं त्रिविधं जातलक्षणम् ॥ ५४ ॥

ततस्त्वष्टादशेऽध्याये कथितं सूतसङ्ग्रहम् ।
एवमेव चतुर्विंशे प्रोक्ता सोपनिषत् तथा ॥ ५५ ॥

पञ्चविंशतिकेऽध्याये गुह्यमुक्तं महोदधौ ।
उत्पत्तिं गुरुपूजां च षड्विंशत्यां मयानघे ! ॥ ५६ ॥

सप्तविंशतिकेऽध्याये पूजालक्षणमुच्यते ।
अष्टाविंशतिकेऽध्याये कर्मकारस्य लक्षणम् ॥ ५७ ॥

आचार्यस्य च सर्वत्र लक्षणानि वदाम्यहम् ।
ऊनत्रिंशतिकेऽध्याये जापितं प्रोच्यते मया ॥ ५८ ॥

इत्येवं मार्गतो द्रष्टुमनुभुक्तं महर्षिभिः ।
क्रियापथमथोवाच पारम्पर्योपदेशतः ॥ ५९ ॥

प्रशस्ते तिथिनक्षत्रे मुहूर्ते चातिपूजिते ।
कल्याणविधिना पूर्वं रसकर्म समाचरेत् ॥ ६० ॥

आयसे कर्परे स्थाप्य स्नुहिक्षीरे रसोत्तमम् ।
स्तन्येनापि ततः स्त्रीणामार्जैश्चोपविषैस्तथा ॥ ६१ ॥

तिन्त्रिणीकफलाम्लेन विषतैले च पाचयेत् ।
रुधिरक्षारमूत्रैश्च संमर्द्य क्वाथयेद् भृशम् ॥ ६२ ॥

जहाति कञ्चुकं + मनवपट्ट इवोद्गते ।
पाकाष्टकविधिस्तेषां कर्तव्यं(? व्यो) विधिपूर्वकम् ॥ ६३ ॥

---

१. 'त्वा', २. 'टिस्तथा ॥' ख. पाठः. ३. 'णं हि व' क. पाठः.

शोधनैश्छेदनैश्छेद्यै रञ्जनैर्बोधनैस्तथा ।
क्रामणैर्मूलिभिः सर्वैः षट्कर्म प्रतिशोधयेत् ॥ ६४ ॥

शोधयेच्छोधनद्रव्यैः स्विन्नं स्विन्नमकञ्चुकम् ।
काकास्नेह+नाशार्थं क्राथयित्वा तु मर्दयेत् ॥ ६५ ॥

न पलादधिकं शोध्यं न पलात् किञ्चिदूनतः ।
पलमेकं समादाय रसराजस्य रञ्जयेत् ॥ ६६ ॥

ज्वा[१]लिनीबीजसंयुक्तैर्भल्लातकसमायुतैः ।
मरिचैः शल्मलीपुष्पैः सैन्धवासुरिनागरैः ॥ ६७ ॥

पलाशबीजैः सविषैः काकविष्ठा हरिद्रया ।
गुलेन सह संयोज्य मर्दयीत (?) रसोत्तमम् ॥ ६८ ॥

कृष्णसौवीरकैः सम्यगाकालि[२]कपरिक्षयात् ।
बहुशः परिमृज्यात् तं शोधनेयं[३] प्रकीर्तिता ॥ ६९ ॥

लवणोपविषव्योषैः सविषैः सह योर्जयेत् ।
स्वेदितास्तीक्ष्णवर्गेण तेजनेयं द्वितीयका ॥ ७० ॥

ब्रह्मदण्डस्य मूलानि वर्चा वञ्चुलकस्य च ।
ब्रह्म सोमागलं चैव विष्ठावर्गो[५] रजः स्त्रियः ॥ ७१ ॥

पक्षच्छेदकरैश्चान्यैरुक्तैरुपविषैः सह ।
कल्केन मधुमिश्रेण पाचनं परिकीर्तितम् ॥ ७२ ॥

प्रक्षालयीत (?) पूर्वोक्तैरुष्णैः सौवीरकैः पुनः ।
तृतीयं पाशनं ज्ञेयं सर्वतन्त्रेषु पूजितम् ॥ ७३ ॥

कटुका रजनी पाठा त्रिजातकसमायुतैः ।
चव्यपिप्पलिमूलैश्च त्रिफलाचित्रकैः सह ॥ ७४ ॥

पूर्वोक्तविधिना कल्कं स्वेदयेदायसे शुभे ।
दाशनेन चतुर्थेन रसो भवति निर्मलः ॥ ७५ ॥

---

१. 'जा' ख. पाठः. २. 'परीक्षया ।', ३. 'नैवं प्र', ४. 'जितम् ॥', ५. 'र्गा' क. पाठः.

निर्मलीभूतमादाय सन्धाने चाभ्रकं चरेत् ।
सन्धानसुरया चीर्णं त्रिसङ्घातेन पातयेत् ॥ ७६ ॥

विडेन सह संयोज्य पातयेद् यन्त्रवित्तरः ।
पातने पातने चास्य भवेद् दशगुणं धरा ॥ ७७ ॥

+ + + कुरमूलं च विषालुः काञ्चुकी हला ।
मत्स्याक्षी करटी वज्री आखुकर्णी सपुत्रिणी ॥ ७८ ॥

राजकोशातकी मुक्ता मुक्तमूली द्रवन्तिका ।
त्रयोदश सुरा ज्ञेयाः सन्धानेयं प्रकीर्तिता ॥ ७९ ॥

अथाभ्रकपुटं कुर्यादागस्त्येन पुनर्नवैः ।
धुर्धूरकरसैस्त्रीणि स्नुहिक्षीरे तथा त्रिशः ॥ ८० ॥

सर्वोपविषयुक्तेन कान्तं टङ्कविषेण च ।
सन्धानसुरया चैव त्रिपुटं तं तु कारयेत् ॥ ८१ ॥

मार्जारवल्ल्युत्तमकाकमाच्या त्रिभिः पुटैर्मारितमभ्रचूर्णम् ।
एतद् रसेन्द्रस्य गतिक्षयार्थं यथाचरेदक्षयकर्मकारी ॥ ८२ ॥

(योग्यं ?) पुनर्नवामूलसुदग्धभस्मना परिस्रुतं गार्दभमम्बु सप्तधा ।
मृताभ्रचूर्णं तु पुटेन भावितं तदद्भिरित्यत्र कृतं सुसन्धितम् ॥ ८३ ॥

सुसंस्कृतं सूतकमभ्रकं तथा सञ्चारयेत् पूर्वसुसन्धिनैव तु ।
चरेत् सुखोष्णेन दिनानि सप्तधा व्रजेत पिण्डत्वमतो न संशयः ॥ ८४ ॥

॥ इति रसशोधनम् ॥

विषाञ्जलीगन्धकमातृवाहकाकुलीरमज्जा[1] घनचूर्णसंयुता ।
वज्रीकृता वज्रदुहेन[2] निग्रहो रसस्य सञ्चारयिता नमस्करी (?) ॥ ८५ ॥

दशमूषागतं ध्मातं दशवारं च चारितम् ।
रसेन्द्रौषधिसंयोगान्निग्रहं कुरुते रसः ॥ ८६ ॥

मृताभ्रचूर्णं द्विमुखी च तुल्यौ विषं च गन्धो पललाङ्गली च ।
लेपो घनो वज्रमृदाग्निमध्ये क्षिप्रं रसस्तिष्ठति धाम्यमानः ॥ ८७ ॥

---

१. 'ञ्जा' क. पाठः. २. 'है नि' ख. पाठः.

सुवर्णचूर्णं मूषायां सूतको घनमिश्रितः ।
अन्धमूषागतं ध्मातं बध्यते क्षिप्रमग्निना ॥ ८८ ॥

हेमाभ्रसत्त्वं समनश्शिलालं सतीक्ष्णचूर्णं सहताप्ययुक्तम् ।
अन्धीकृतं धामितमङ्कुशेन्द्रं[1] रसस्य गुह्यं प्रवदन्ति तज्ज्ञाः ॥ ८९ ॥

यथा वनगजो मत्तो न निवार्यो विनाङ्कुशम्[2] ।
एवं रसगजेन्द्रोऽपि न तिष्ठति विना घनात् ॥ ९० ॥

बन्धनं क्रामणं चैव रञ्जनं वेधनं तथा ।
सर्वकर्मकरं गुह्यमङ्कुशं परमं स्मृतम् ॥ ९१ ॥

अभ्रचूर्णस्य भागैकं दशभागाम्लकाञ्जिकौ ।
विष्ठा पारावती चैव वञ्चुलं लवणं तथा ॥ ९२ ॥

त्रयाणां कल्य भागैकं मिश्रयित्वा विपाचयेत् ।
काञ्जिकेन सुखोष्णेन प्रक्षाल्य च पुनः पुनः ॥ ९३ ॥

शोषयित्वा पुनश्चैव प्रक्षाल्यैवं विपाचयेत् ।
सप्तवारं कृतं चूर्णं मर्दयेदौषधैरिमैः (?) ॥ ९४ ॥

सैन्धवं कुनटीं चैव (क ? कु)सीसं मरिचं तथा ।
स्नुहिक्षीरेण संलोड्य पुटपाकेन पाचयेत् ॥ ९५ ॥

तच्चूर्णं दशभागः स्याद् भागाश्चैकादशास्त्विमे ।
अञ्जनं हरितालं च सौराष्ट्रं विमलं तथा ॥ ९६ ॥

सुवर्चिका क्षारकाक्षी गन्धकं टङ्कणं शिला ।
माक्षिकं रसकं चैव सर्वमेकगतं भवेत् ॥ ९७ ॥

शुद्धवङ्गस्य भागैकं तीक्ष्णभागं च शोधितम् ।
अभ्रस्याष्टमभागेन[3] हेमं तारं तथागजम् ॥ ९८ ॥

सर्वमेकीकृतं कल्कं भावयेदौषधैरिमैः (?) ।
स्नुह्यर्कगौतमक्षीरैर्माहिषक्षीरवृक्षजैः ॥ ९९ ॥

त्रिसप्तवारान् सम्भाव्य गोऽजाविस्त्रीस्तनस्नुतैः ।
वज्रीकन्दलिशिग्रूणि व्रीहिका ब्रह्मदण्डिका ॥ १०० ॥

---

१. 'न्द्रः', २. 'शात्', ३. 'भ्रकस्याष्टभा' क. पाठः.

आखुकर्णी सुनिचुला वज्रवल्ली च भावयेत् ।
शुक्तेन मधुमिश्रं तु द्रावणांशसमन्वितैः ॥ १०१ ॥
प्रक्षिप्य खदिराङ्गारैस्त्रिसङ्घातेन पातयेत् ।
पतन्ति गुलिकास्तत्र वज्रवैडूर्यसन्निभाः ॥ १०२ ॥
समहेमद्रुतास्ताश्च हेमकर्मकरा मताः ।
रजते वेधयेद्धेमं रसेन समधारिणा ॥ १०३ ॥
एतेनाङ्कुशगुह्येन चारितं तु महारसः ।
प्रकाशं धाम्यमानस्तु न नागमुपगच्छति ॥ १०४ ॥
वाराहिमूलं सविषं सलाङ्गलं घनोद्भवं चैव रुदन्तिकायुतम् ।
निर्गुण्डिकार्ककुटजैश्च लोणैः विहङ्गराजस्य तु पक्षघातनम् ॥ १०५ ॥
एतन्नियामकैश्चूर्णं धामितं घनमङ्कुशम् ।
पक्षच्छेदं प्रशंसन्ति रसस्य रसवादिनः ॥ १०६ ॥
फलरसकसुकाञ्चनाभकाचं वनजसुतीक्ष्णयुतं सुहेमयुक्तम् ।
हुतवहगतमेतदेव रक्षेद् रसवरमप्रतिमं प्रकीर्तयन्ति ॥ १०७ ॥
घनाङ्कुशेन तीक्ष्णेन हेमेन रसकेन च ।
रज्यते बध्यते क्षिप्रं रसकस्तु विशिष्यते ॥ १०८ ॥
दशपात्रमतिक्रान्ता मणयश्च महारसाः ।
लोहसंशुद्धहेम्ना तु द्रावितं रसरञ्जितम् ॥ १०९ ॥
सुरक्ततीक्ष्णभागानां पञ्चमं विषभागिकम् ।
षष्ठं च सप्तमं चैव रसकर्माक्षिजं भवेत् ॥ ११० ॥
अष्टमं पारतं चूर्णं पुटपाकेन पाचयेत् ।
समं वा द्विगुणं वापि ताम्रे निर्वापयेच्छनैः ॥ १११ ॥
मनःशिलामृतेनैव समं नागेन भावयेत् ।
एतेन कृष्टिशुल्बेन क्रमशः क्रमशः पुटान् ॥ ११२ ॥
दशान् दशान् दशान्वापि रक्तहेम सुरञ्जितम् ।

---

१. 'नाः'. २. 'वावयेत' क. पाठः.

* उपरसरसलोहैर्बस्तमूत्रैः (स)(पिष्टैः ? विष्टैः)

रसकनियमितं रसकनियमिकाया या कदल्योश्च मूषिका उपविष्टमूषैस्तासु सूतं सुगुप्तं कनकमपि पुटपादं कृष्टिपक्कं पुटैर्यत् ॥

सुवसनमथ बद्ध्वा हेमतैले निमग्नं
ज्वलति सममयस्के भाजने सूतराजम् ।
व्यपगतमलसत्त्वं सप्तरात्राद्रसेन्द्रो
मुदितदिनकराभः स्यात् सहस्रांशवेधी ॥ ११३ ॥

सूतकं सारणसहं समबीजेन सारयेत् ।
सारितं समबीजेन पुनश्च प्रतिसारयेत् ॥ ११४ ॥

ताम्रताराररलोहेषु सहस्रांशेन वेधयेत् ।
वेधितं कनकं दिव्यं देवाभरणसम्मतम् ॥ ११५ ॥

चूलिकालवणसिक्थटङ्कणं गन्धकं च चमराजियुग्विषम् ।
सम्भवप्रवरयोगयोषितां क्रामणं रसवरस्य दुर्लभम् ॥ ११६ ॥

इत्येतत् क्रामणं प्रोक्तं + + + + + + + + ।
परिवेष्टितकल्केन रसोऽह्यभ्यन्तरस्थितः ॥ ११७ ॥

ततः क्रमति लोहेषु तैलबिन्दुरिवाम्भसि ।
प्रोक्तः करणबन्धस्तु सहस्रशतवेधकः ॥ ११८ ॥

अतः परं वृद्धिक(रणं ? रं) रसधेनुरिहोच्यते ॥ ११९ ॥

इति महोदधौ रसोपनिषदि करणबन्धो नाम
प्रथमोऽध्यायः ॥

द्विसप्ततिश्लोकाः । (७२) (?)

---

## अथ द्वितीयोऽध्यायः ।

रसवृद्धिकरीं वक्ष्ये पुत्रपौत्रानुगामिनीम् ।
पलेनैकेन बद्धेन सहस्रशतवेधिना ॥ १ ॥

नागेन बध्यते नागो नान्यथा बन्धनं भवेत् ।
एवं रसो रसेन्द्रेण बध्यते रज्यतेऽपिच ॥ २ ॥

---

* पद्यमेवेदं किमपि क्रमादशुद्धिप्रचुरं अंशमवापेति प्रतीयते ।

स महेन्द्रकुबेराभ्यां यस्तु बध्नाति सूतकः ।
धर्मार्थकाममूलत्वात् परं सूतकबन्धनम् ॥ ३ ॥

शोधितं तेजितं चैव वाशितं दाशितं तथा ।
चारितं पातितं जार्यं पूर्वसंस्कृतकं रसम् ॥ ४ ॥

अभ्रसत्त्वायसं वङ्गं शुल्बमारं भुजङ्गमम् ।
एतानि समभागानि चारयीत रसोत्तमम् ॥ ५ ॥

शुल्बं वा मुखमादाय सङ्घातं वाथ चारयेत् ।
यावदेकत्वमापन्नो रसः परमदुर्जयः ॥ ६ ॥

दपद्येवं ततः कृत्वा कूपिकाचसमन्वितम् ।
पेषयेत् सोदरो भूत्वा यावत् तन्नष्टविग्रहम् ॥ ७ ॥

चारयेच्छ्लक्ष्णपिष्टं तु त्रुटिशस्त्रुटिशः क्रमात् ।
ततो रम्भादले बद्ध्वा वस्त्रेणावेष्टयेद् बुधः ॥ ८ ॥

विडेन सहितं पश्चात् त्रिसङ्घातेन जारयेत् ।
सौवर्चलं गन्धकटुत्रिकं च सौराष्ट्रकासीस ++ पलं च ।
एतानि शिग्रोः शतभावितानि पाषाणखण्डान्यपि जारयन्ति ॥ ९ ॥

त्रिपलं गन्धकासीसमितरेषां पलं पलम् ।
अथवा समभागानि सर्वाण्येतानि योजयेत् ॥ १० ॥

अनेन क्रमयोगेन यावत् षड्गुणतां व्रजेत् ।
षड्लोहनिगलैर्बद्धस्तिष्ठत्यधिकविक्रमः ॥ ११ ॥

स्वमृत्युनिहतान् कृत्वा लोहवर्गान् पुटे पचेत् ।
रक्तवर्गरसेनापि यावद् रागवरस्तथा ॥ १२ ॥

ततः शैलमये भाण्डे बिलं दत्त्वा प्रयत्नतः ।
बिलस्योपरि तच्चूर्णं चूर्णस्योपरि तद्रसम् ॥ १३ ॥

पुनश्चूर्णं बिलं दत्त्वा रक्तवर्गरसस्तथा ।
पिधाय लेपयेद् भाण्डं जतुना सिक्थकेन वा ॥ १४ ॥

गोकरीषसुपूर्णायां गर्तायां निखनेद् भुवि ।
मासे मासे समुद्धृत्य रक्तवर्णरसं तथा ॥ १५ ॥

---

१. 'ढ्ढेह', २. 'भ्र', ३. 'तां', ४ 'र्गं', ५. 'व' क. पाठः.

षष्ठे मासे समुद्धृत्य शोधयेदाम्लकाञ्जिकैः ।
प्रमाणं सन्निधानस्य द्रावणं तं विशिष्यते ॥ १६ ॥

रक्ताग्निजारु प्रक्षाल्य दधिमस्तु रसेन तु ।
करञ्जपत्रस्वरसे मरिचानि प्रपेषयेत् ॥ १७ ॥

तत्कल्कं जारुणाक्षिप्य गालयेत् सजलं भवेत् ।
तज्जलं न स्पृशेदुग्रं स्थापयेद् विषसन्निभम् ॥ १८ ॥

चूर्णपारतसौराष्ट्रं हरितालं मनश्शिला ।
कासीसं[1] गैरिकं चैव दत्त्वोत्तरपलं भवेत् ॥ १९ ॥

षट्पलं सैन्धवं रक्तं गन्धकं स्याद् द्विषट्पलम् ।
सौवर्चलं पञ्चदश सर्वमेकगतं भवेत् ॥ २० ॥

अग्निजारुं रसेनैव शतवारांस्तु भावयेत् ।
ततः प्रसन्नसुरया मातुलुङ्गरसेन च ॥ २१ ॥

एतन्महाविलं नाम द्रावणं तु नियोजयेत् ।
षट्पलं माक्षिकं दद्यात् सन्न्यासविधिरुत्तमा ॥ २२ ॥

द्वादशेन रसेनैतत् स्तोकं स्तोकं प्रपेषितम् ।
लोहवर्गैश्च संपिष्ट्वा मातुलुङ्गफलाम्बुना ॥ २३ ॥

बिलेनैतेन सञ्छाद्य सुनिगुप्तं निधापयेत् ।
लेपितं गुञ्जकल्केन हरितालविषेण च ॥ २४ ॥

शोषितं तं विडार्धेन प्रक्षिप्योपरि तद्रसम् ।
तस्योपरि विडं दत्त्वा मातुलुङ्गाम्लपूरितम् ॥ २५ ॥

ततः शैलमये भाण्डे बद्ध्वा वा सूत्ररज्जुना ।
कटुशर्करचूर्णेन माषपिष्टगुलेन च ॥ २६ ॥

लाक्षया बहलं लिप्य निश्छिद्रं सन्धि[2]मेकतः ।
एवं संस्थाप्य चोद्धृत्य ततः कृष्टिं तु चारयेत् ॥ २७ ॥

रसोत्थां घोषकृष्टिं वा रसतुल्यं विचक्षणः ।
जीर्णे जीर्णे तु कर्तव्यः पश्चाद् बीजेन योजयेत् ॥ २८ ॥

---

१. 'स', २. 'हे' क. पाठः.

हेमपङ्कमयः शुल्बं[1]मभ्रसत्त्वं भुजङ्गमम् ।
अन्धमूह्य प्रकाशायां यावद्भागद्वयं स्थितम् ॥ २९ ॥
बीजस्य चीर्णजीर्णस्याप्युत्तरेण तु योजयेत् ।
अष्टौ भागाः सुवर्णस्य कृष्टिभागसमं तथा ॥ ३० ॥
पत्रीकृत्य पुटैः पश्चाद् गते शुल्बे शनैः शनैः ।
एतद् बीजं महागुह्यं जीर्णं रसवरेण तु ॥ ३१ ॥
वेधकं सर्वसत्त्वानां पिण्डीभवति तत्क्षणात् ।
पिण्डस्यार्धं + + + + दरदार्धं मनश्शिला ॥ ३२ ॥
मनश्शिलार्धं गन्धाह्वा गन्धाह्वार्धं तु तालकम् ।
तालकार्धं तु माक्षीकं यत्किञ्चिदपि भावयेत् ॥ ३३ ॥
पक्षच्छेदकरैश्चापि विषजैश्चापि लेपयेत् ।
मूषालेपं ततः कृत्वा तत्र निक्षिप्य गोलकम् ॥ ३४ ॥
अन्धमूह्य करीषाग्नौ स्वेदयेद् दिवसत्रयम् ।
कुङ्कुमं शिखिपित्तं च रोचना गोशरीरजा ॥ ३५ ॥
रुधिरेण समायुक्तं मूषालेपं तु पूजितम् ।
पश्चादङ्गारमध्यस्थं ध्मान्तं वह्निसमप्रभम् ॥ ३६ ॥
न चालयेत्तु तत्तुत्थं यावन्निर्वाणमागतम् ।
दिवसत्रयमेवं तु कर्म कुर्याद् विचक्षणः ॥ ३७ ॥
चतुर्थेऽहनि धान्तव्यं यावत् क्लिन्नं समन्ततः ।
मयूरगलकप्रख्यं सौदामिनिसमप्रभम् ॥ ३८ ॥
जायते स रसो दिव्यः सर्वसत्त्वानुवेधकः ।
आरोट्टरसमादाय चार्यं हेम नवादिकम् ॥ ३९ ॥
रसदग्धमर्षिं दत्त्वा (फ?प)लार्धेन तु मर्दयेत् ।
लोहानामेव सर्वेषां तनुपत्राणि कारयेत् ॥ ४० ॥
सुवर्णरजतं ताम्रमायसं भुजगं त्रपु ।
पूर्वं बद्धरसेन्द्रस्य सहस्रांशेन योजयेत् ॥ ४१ ॥

---

१. 'ल्बे' क. पाठः.

तारमारं तथा शुल्बं तीक्ष्णं वङ्गं भुजङ्गमम् ।
घोषं वा घण्टलोहं वा सहस्रांशेन वेधयेत् ॥ ४२ ॥
एवं विद्धं भवेद्धेमं जाम्बूनदसमप्रभम् ॥ ४२½ ॥

इति महोदधौ रसोपनिषदि रसवृद्धिकरणं नाम
द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः ।

स्पर्शान्ते वृद्धिमाचक्ष्ये सर्वसङ्घातमव्ययम् ।
पूर्वमङ्कुशसञ्जीर्णं सर्वलोहानुरञ्जितम् ॥ १ ॥

सर्वोपरसधातुभ्यो मणिभिः सविषैस्तथा ।
मूलीभी रक्तपीताभी राजद्भिः स्नेहमूत्रजैः ॥ २ ॥

यावता न पतेत् सत्त्वं तावता नैव बध्यते ।
पतितं तु यदा सत्त्वं बद्धो रसवरस्तथा ॥ ३ ॥

अभ्रस्य पाटले सत्त्वमन्तर्गतमचाक्षुषम् ।
तस्य विस्रावणं दिव्यं मृदुसत्त्वं महाङ्कुशम् ॥ ४ ॥

तत्क्षणादेव संभक्ष्य बध्यते पारतो रसः ।
रज्यते चापि विधिवत् स्पर्शान्तोऽपि भवेद् यथा ॥ ५ ॥

पाटलानि तु सङ्गृह्य तस्य पत्राणि कारयेत् ।
प्रलेप्य मुष्ककक्षारैर्बिडङ्गमरिचायुतैः ॥ ६ ॥

दग्धानि चाग्निवर्णानि जारोश्चापि रसे क्षिपेत् ।
तस्य चूर्णस्य भागौ द्वौ द्वौ भागौ तालकस्य च ॥ ७ ॥

कासीसविमलं सिन्धुगन्धसर्जरसं तथा ।
शिला सौवर्चलं ताल्यं रसकं तुत्थशैलजम् ॥ ८ ॥

सस्यकं टङ्कणं विष्ठा वाकुजीनां च बीजकम् ।
अञ्जनं हिङ्गु सौराष्ट्रं तथा चाञ्जनमूलकम् ॥ ९ ॥

एकैकशो भवेद् भागो नागतीक्ष्णं तथांशिकम्।
रसस्य वङ्कजीर्णस्य माषकं स्याच्चतुष्पले ॥ १० ॥
रसद्विगुणितं हेमं ताराधंधरणं भवेत्।
निक्षिपेदन्धमूषायां भावितं स्नेहवर्गजैः ॥ ११ ॥
चूर्णं प्रसन्नया भाव्यं गौली माध्वी च शुक्तिकैः।
सर्वाम्लैः सविषैर्मूत्रैः भण्डिकामदयन्तिकैः ॥ १२ ॥
देवदालूरसेनापि ततो मार्जारपादिना।
अङ्कोलफलजेनापि मेषमुष्करसेन च ॥ १३ ॥
एवं कृत्वा प्रयत्नेन धामयेदधरोत्तरः।
अधो मधुघृतं दद्यात् त्रिसङ्घातस्य बुद्धिमान् ॥ १४ ॥
अग्निवर्णं यदा तुत्थं समन्तात् प्रविलीयते।
पतितं तं विजानीयात् ततोर्विश्रामयेद् बुधः ॥ १५ ॥
सरसः पारतीयस्य चीर्णमात्रान्निबध्यते।
तस्य सत्त्वस्य भागः स्याद्धेमभागत्रयं तथा ॥ १६ ॥
विलोड्य रसकल्केन ततो ज्योतिर्भविष्यति।
माक्षिकं सरसं कापि संयुक्तः सघनो भवेत् ॥ १७ ॥
सरसो रसराजेन स्पर्शनाद् बन्धरञ्जनम्।
घनस्य च भवेद् भागो रसभागास्त्रयस्तथा ॥ १८ ॥
मर्दयेद् रसराजेन रसो बद्धो भविष्यति।
अनेन विधिना यस्तु पारतीयो महारसः ॥ १९ ॥
विद्धेन सह संयोज्य धामयेदविशङ्कितः।
अग्नौ सर्वमयं गच्छेन्नासौ क्षयमवाप्नुयात् ॥ २० ॥
नातिक्रामति मर्यादां वेलामिव महोदधिः।
अग्निस्तस्य रसेन्द्रस्य शैलपात्रगतस्य च ॥ २१ ॥
प्रक्षिपेल्लोहचूर्णानि मणयश्च महारसाः।
विषोपविषवर्गांश्च पञ्चवर्गांश्च जारनम् ॥ २२ ॥

---

१. 'तै', २. 'व्यं' क. पाठः.

रसश्चोपरसश्चैव रक्तपीतास्तथौषधाः ।
लवणानि तथा क्षारान् तत्सर्वं सन्निधापयेत् ॥ २३ ॥

एवं निधाप्य षण्मासान् रसस्पर्शेन विध्यति ।
हस्तेन न स्पृशेत् तं तु दहत्यग्निरिव स्पृशन् ॥ २४ ॥

तदा सिद्धं विजानीयात् तद् रसं विषसन्निभम् ।
आयसानि तु[1] लोहानि स्पर्शेनैव तु विध्यति ॥ २५ ॥

विलेषु वा निधातव्यं स्थले वा शैलकूपजे ।
लेपयेद् वस्त्रबन्धेन लेपयेलाञ्जनं शुभम्[2] ॥ २६ ॥

सर्वाण्येव तु बीजानि यथाशक्त्या तु संहरेत् ।
आवर्त्य निक्षिपेद् यावद् रसमेकगतं भवेत् ॥ २७ ॥

घनीभूतं ततो दृष्ट्वा निघर्षयेत् + + + + + ।
+ + + + + + + + + + + + + पतितं पुनः ॥ २८ ॥

दहेत् तानग्निवर्णास्तु शीतीभूतं ततो हरेत् ।
अमलं काञ्चनं भाति देवगन्धर्वभूषणम् ॥ २९ ॥

एष सङ्कथितो देवि! स्पर्शवेधी घनो रसः ।
स्पर्शान्ते वृद्धिकरणं बीजसंस्करणं परम् ॥ ३० ॥

इति महोदधौ रसोपनिषदि स्पर्शवृद्धिकरणं नाम
तृतीयोऽध्यायः ॥

---

## अथ चतुर्थोऽध्यायः ।

माक्षीकरसकादीनां लोहानां च नियोगतः ।
बीजाद्[3] बीजोत्तरं चापि संस्कारं च विशेषतः ॥ १ ॥

अथातः संप्रवक्ष्यामि रसकर्म विधानतः[4] ।
एकबीजं द्विबीजं च चतुर्बीजं सषट्ककम् ॥ २ ॥

---

१. 'च', २. 'शुभम्', ३. 'न् बी', ४. 'नम्' क. पाठः.

त्रिकं पञ्चकमेवापि लोहमाक्षीररञ्जनात् ।
चतुर्विंशतिर्बीजानां योगाद् भेदान्तरं शृणु ॥ ३ ॥

माक्षिको[1] विमलश्चैव रसो वै कान्तमेव च ।
सस्यकं च पलं शैलं सप्त एव महारसाः ॥ ४ ॥

कासीसमञ्जनं काक्षी हरितालं मनश्शिला ।
गैरिकं गन्धपाषाणं सप्तैवोपरसाः स्मृताः ॥ ५ ॥

नागं वङ्गमतः शुल्वं हेमं तीक्ष्णं तथाभ्रजम्[2] ।
रजतं चेति सप्तैते प्रोक्ता लोहरसाः शुभाः ॥ ६ ॥

शुल्बायसं मूलयोनिस्तत्र सारं तु काञ्चनम् ।
पूतिकं वङ्गनागं स्यात् कासारं सङ्करं विदुः ॥ ७ ॥

देववैकृत[3]वज्राणि महासाराणि लक्षयेत् ।
तमोघ्नं रञ्जनं चान्यद् रसलोहं विधीयते ॥ ८ ॥

गोमेदकोऽमृतामश्च श्यामं चाञ्जनमूलकम् ।
लोहिताक्षं च कूर्प[4] च लोहशोधनतेजनाः ॥ ९ ॥

ज्योतीरसेन सप्तैते मणयश्च महारसाः ।
सैन्धवं रोमकं चैव सामुद्रं बिडसम्भवम् ॥ १० ॥

चूलिकालवणं चैव तथा कृष्णसुवर्चलः ।
उष्ट्रया सह सप्तैते लवणानि रसाः स्मृताः ॥ ११ ॥

सक्तुकं वत्सनाभं च छिद्राङ्गं पीतमुस्तकम् ।
कर्कटं कालकूटं च मर्कटं मदविह्वलम् ॥ १२ ॥

चित्रकं मारकं दुःखं निर्जीवं प्राणवर्धनम् ।
सुक्षीरं घूर्णकं मुण्डे[5](मु ? मू)लं रुधिरसम्भवम् ॥ १३ ॥

दोषघ्नामृत[6]नाराचं तीक्ष्णं हालाहलं विषम् ।
वटोदुम्बरसङ्काशं मूलकं मण्डमूल(क)म् ॥ १४ ॥

कीटघ्नं मारुजं रूक्षं पर्पटं रोमनाशनम् ।
काण्डकालाह्वबिल्वानि पौण्डरमुग्रपाण्डरम् ॥ १५ ॥

---

१. 'के', २ 'क्ष्यमथा', ३. 'न्त', ४. 'चू', ५. 'ण्डं', ६. 'तं' क. पाठः.

नागरं मधुसिद्धं च घोरं चायुधपातनम् ।
दधिक्षीराणि वैरूप्यं लक्षणानीह लक्षयेत् ॥ १६ ॥
बीजानां तु तमोघ्नानि चत्वा(रि ? रिं)शन्महाविषा ।
लाङ्गली करवीरं च कारकः कटुवतसः ॥ १७ ॥
स्नुह्यर्कचित्रकः पाठा त्रिवृता चाग्निमन्थकम् ।
वज्रवल्लीङ्गुदागुण्डी व्याघातं चाखुमारकम् ॥ १८ ॥
कन्दकी वज्र+न्दं च वाशा कोशातकीद्वयम् ।
गन्धर्ववारुणीद्वीपानिम्बकीभवमेव च ॥ १९ ॥
उन्मत्ता चोत्तमा वल्ली ब्रह्मसोमसुवर्चला ।
हस्तिवल्ली पलाशश्च शैवलँस्ततसूदनः ॥ २० ॥
शुर्कः शुकनसाङ्कोलस्वयंगुप्ता चक्रमर्दकः ।
सूरणं काबुकी धात्री वचा वा + निशाचरी ॥ २१ ॥
वज्री वज्रः सहा चैव लाम्बुका काकजङ्घिका ।
श्लेष्मातक्यक्षगाङ्गेयी कुरण्डनिचुलँस्तथा ॥ २२ ॥
भल्लातकशिरीषश्च शिग्रुमर्दनकोद्रवः ।
शाकः शवरवन्दाकौ द्वे पिप्पल्यौ पलण्डुकः ॥ २३ ॥
मदना मोहनाबिल्वं पीलुश्चैव च पूतिकः ।
कणिकस्यन्दनागाह्वा वायुः सिंहं च कर्णिकः ॥ २४ ॥
लोध्रः प्रियालुः पिण्डालुर्बिल्वः सचिरिबिल्वकः ।
कटुकः कटुकालाबु कुटजः कोहलस्तथा ॥ २५ ॥
एतान्यँशीतयः प्रोक्ताः कर्मण्युपविषाणि च ।
द्विमुखी मेकचित्राङ्गस्तथा चैवेन्द्रगोपकः ॥ २६ ॥
षड्बिन्दुमातृवाहश्च मण्डली गोपमण्डली ।
भूता षट्चरणं खर्जू रामठं टङ्कणं तथा ॥ २७ ॥
चूर्णानि चाङ्गभूतानि द्रावणाङ्गमिति स्मृताः ।
कङ्कुष्ठं सधलाक्षा च खादिरं चाखुमारकम् ॥ २८ ॥

१. 'कं', २. 'मं', ३. 'ङः सप्त', ४. 'कनामा', ५. 'लं त', ६. 'ह्वा', ७. 'न्यु', ८. 'मृ', ९. 'चा' क. पाठः.

श्रीवेष्टसल्लकीशिग्रुनिर्यासं पूर्वसङ्ग्रहम् ।
कुसुम्भकुङ्कुमं चैव रक्तवर्ग इति स्मृतः ॥ २९ ॥

बदरामलचिञ्चा च डाडिमं बीजपूरकम् ।
जम्बीरं फलनारङ्गमाम्लवेतसमेव च ॥ ३० ॥

चाङ्गेयी चाम्लका वृक्षाश्मणकाम्लकमेव च ।
सौवीरमाम्रतक्रं च सर्वे चाम्लगणाः स्मृताः ॥ ३१ ॥

पलाशारुष्करं दन्ती गुञ्जाङ्कोलकतिन्त्रिणी ।
करञ्जजालिनीभिश्च समं मद्यं गुणस्य च ॥ ३२ ॥

वैरण्डं + द्रवन्त्याश्च शिग्रून्मत्तशिरीषकान् ।
एवमाद्यानि चोक्तानि बीजवर्गस्य संज्ञिताः ॥ ३३ ॥

किण्वसन्धानकालस्य नालिकेरोद्भवानि च ।
एवमाद्यानि चोक्तानि सुरावर्ग इति स्मृतः ॥ ३४ ॥

रसैश्च क्षारमूत्रैश्च रुरुजालवणैः ++ ।
+++ पित्तवर्गैश्च शुक्ती रुधिरमेव च ॥ ३५ ॥

वसारक्तकषायेण राज्यक्षीरमधुप्लुतम् ।
विष्ठाबीजगणैः सारैः स्वस्थिसारैर्गणैः स्मृतम् ॥ ३६ ॥

एकविंशत्प्रकारं च शोधने भावनेन च ।
द्रावणे रञ्जने चैव कुर्यादेवं शुभावहम् ॥ ३७ ॥

बीजसंस्कारके चैवं प्रोक्तं वै धातुपातने ।
एवं च रसलोहाश्च बीजद्वीपान्तमेव च ॥ ३८ ॥

इत्येतैः सर्वकरणैः शोधनं परमं स्मृतम् ।
गोनराश्च मयूराश्च पीतसर्पाश्च एव च ॥ ३९ ॥

एवमाद्यानि चोक्तानि पित्तवर्ग इति स्मृतः ।
उभे हरिद्रे माञ्जिष्ठे पतङ्गं रक्तचन्दनम् ॥ ४० ॥

आक्षाकङ्कुष्ठरोहिण्या अच्युता मदयन्तिका ।
पुष्पाणां पीतरक्तैश्च कुसुम्भादि विशेषतः ॥ ४१ ॥

एवमाद्यानि चोक्तानि रक्तवर्ग इति स्मृतः ।
तुत्थकं जालवर्गश्च राजावर्तं च रञ्जकम् ॥ ४२ ॥

श्येनकुक्कुटहंसानां पारावतकपोतयोः ।
ध्वाङ्क्षगृध्रमयूराणां व्याघ्राखुनकुलस्य च ॥ ४३ ॥

विष्ठावर्गः समुद्दिष्टः स्नेहमार्दवकारकः ।
शोधनं पाचनं चैव रञ्जनं च विशेषतः ॥ ४४ ॥

बीजकर्मविधाने च विष्ठा सम्पद्यते यथा ।
हस्त्यश्वगर्दभोष्ट्राणां ग्रहणे मूत्रमुच्यते ॥ ४५ ॥

अजगोमहिषादीनां दीपनं च मलापहम् ।
मनुष्याणां वराहाणां क्रामणं पक्षघातनम् ॥ ४६ ॥

प्रावृण्मण्डूकमूत्रं तु द्रावणं परिकीर्तितम् ।
वसामांसपयःपित्तं रुधिरं च ++ तथा ॥ ४७ ॥

सौवर्चलस्य षड्भागं सैन्धवस्य तु यत् तथा ।
भागः सुवर्चलायाश्च विडभागस्तथैव च ॥ ४८ ॥

माक्षिकस्य भवेद् भागो भागं ताम्बूलचूर्णजम् ।
एषां भागांश्च तत्सर्वं मधुशुक्तेन भावयेत् ॥ ४९ ॥

मण्डूकाश्च विशेषेण बीजपूररसेन च ।
महाचूर्णमिदं नाम्ना द्रावणेषु विधीयते ॥ ५० ॥

सुराया रञ्जनं चान्यद् रसराजस्य चोत्तरम् ।
रसकर्मविधारम्भैः[1] सर्वोपकरणान्वितम् ॥ ५१ ॥

एतान् सम्भृत्य सम्भारान् बीजकर्म समारभेत् ।
बीजं सम्पाद्य विधिवल्लोहं क्षेत्रीकृतं शुभे ॥ ५२ ॥

सूतबीजसमायोगे निष्पत्तिः सस्यवद् भवेत् ।
तक्रे तैले गवां मूत्रे चारनाले गजस्रवे ॥ ५३ ॥

गर्दभस्याथ मूत्रे च कङ्कुतैलेन सप्तशः ।
पञ्चवर्गरसस्विन्नः सर्वोपविषवारिभिः ॥ ५४ ॥

मातुलुङ्गफले स्विन्नं निकर्षेत् काञ्चनप्रभम् ।
टङ्कणं स्तनदुग्धेन पिष्ट्वा चेक्षुरसेन वा ॥ ५५ ॥

---

१. 'म्भं' क. पाठः,

वस्त्रं प्रलिप्य बध्नीयान्माक्षिकं तत्सुलेपितम् ।
कोलस्थे स्वेदयेन्मूत्रे त्रिरात्रं स्वेदयेत् पुनः ॥ ५६ ॥

भावयेन्नरसृक् सप्त तच्छुद्धं मृदुतां व्रजेत् ।
तद्रक्तं कृष्टिशुल्बेन हेमेन द्रावयेत् सह ॥ ५७ ॥

द्रावितं पुटपाकेन पाचितं बीजमुत्तमम् ।
सुशुद्धः शुल्बभागानां पञ्चमं माक्षिकं भवेत् ॥ ५८ ॥

भावितं स्नेहवर्गेण मूषमूकीकृतं[1] धमेत् ।
पुनः प्रकाशमूषायां ततो निर्वाहयेच्छनैः ॥ ५९ ॥

निषिञ्चेद् रक्तसुरया यावच्छुल्बं व्यवस्थितम् ।
चणकाभमशोकाभं करवीरेन्द्रगोपवत् ॥ ६० ॥

स्वच्छं गुरु मृदु स्निग्धं भङ्गे पारतसप्रभम् ।
तत्ताम्रं माषकं गृह्य हेमनिष्के विलापयेत् ॥ ६१ ॥

पत्रीकृत्य पुटं दद्यात् तालपत्रप्रमाणतः ।
हेमावशेषं निर्धान्तं माषं माषं पुनः पुनः ॥ ६२ ॥

वर्णान्तरं पुटे ज्ञात्वा यावत्तत् षोडशं स्थितम् ।
निषिञ्चेत् पञ्चदशभिः सुरायां कुरबके रसे ॥ ६३ ॥

एतद्रक्तं भवेद्धेमं गुञ्जावर्णसमप्रभम् ।
पारतं गैरिकं चैव काक्षीमाक्षिकसैन्धवम् ॥ ६४ ॥

शिलालं स्वर्चिका चैव पिष्टं विमलकं समम् ।
अम्ले पिष्ठाम्लकल्कं[2] तु रक्तं तीक्ष्णे नियोजयेत् ॥ ६५ ॥

पुटेन पाचितं भूयः सर्वपित्तैस्तु भावितम् ।
एतद्धेमेन निर्भ्रान्तं त्रुटिशस्त्रुटिशः क्रमात् ॥ ६६ ॥

द्रावितं पुटपाकेन पाचितं बीजमुत्तमम् ।
निषिञ्चेद् रञ्जनातैले नीलं भवति शोभनम् ॥ ६७ ॥

कर्णिकारस्य पुष्पाणां रसेन सह पारतम् ।
भावितं शतशो वाप्य निषिञ्चेच्छातके[3] रसे ॥ ६८ ॥

---

१. 'मूकमूषीकृ', २. 'अम्लेन पिष्ट्वा क', ३. 'त्र' क. पाठः.

एवं नागं भवेच्छुद्धं रक्तं च परिशोधितम् ।
निर्वपेद्धाटके शुद्धे हेमं चाशोकसप्रभम् ॥ ६९ ॥

इङ्गुदस्य च यद् बीजं पारतं रक्तकौसुदम् ।
एकीकृत्य वपेद् वङ्गे तिलकस्य रसे क्षिपेत् ॥ ७० ॥

एतन्माक्षिकसहितं हेम्नि निर्वाहयेच्छनैः ।
वनार्जुननिषिक्तं तु भवेन्मरतकप्रभम् ॥ ७१ ॥

नन्दिकावर्तसहितं तारं विगतकल्मषम् ।
तदर्धेन समायुक्तं मानुकादधिकं भवेत् ॥ ७२ ॥

मृतनागस्य भागैकं माक्षिकं द्विगुणं भवेत् ।
मूकमूषागतं तत्र टङ्कणेन युतं धमेत् ॥ ७३ ॥
यावद् द्विगुणनिध्मा(न्त ? त)न्नागमाक्षिकमुच्यते ।
तदेव हेम्नि नि(र्द्धान्त ? ध्मात)न्नागहाटकमुच्यते ॥ ७४ ॥

मृतस्य वङ्गभागैकं माक्षिकं द्विगुणं भवेत् ।
भावितं स्नेहवर्गेण मूकमूषीगतं धमेत् ॥ ७५ ॥
यावद् द्विगुणनि(र्द्धान्तं ? ध्मातं) वङ्गमाक्षिकमुच्यते ।
तदेव हेम्नि नि(र्द्धान्तं ? ध्मातं) वङ्गहाटकमुच्यते ॥ ७६ ॥

मृतताम्रस्य भागैकं माक्षिकं द्विगुणं भवेत् ।
भावितं स्नेहवर्गेण मूकमूषीकृतं धमेत् ॥ ७७ ॥
यावद् द्विगुणनि(र्द्धान्तं ? ध्मातं) ताम्रमाक्षिकमुच्यते ।
तदेव हेम्नि नि(र्द्धान्तं ? ध्मातं) रक्तहाटकमुच्यते ॥ ७८ ॥

मृततीक्ष्णस्य भागैकं माक्षिकं द्विगुणं भवेत् ।
भावितं स्नेहवर्गेण मूकमूषीकृतं धमेत् ॥ ७९ ॥
यावद् द्विगुणनि(र्द्धान्त ? ध्मात)मारमाक्षिकमुच्यते ।
तदेव हेम्नि नि(र्द्धान्त ? ध्मात)मारहाटकमुच्यते ॥ ८० ॥

प्रशस्तबीजकरणं रञ्जनं वेधनं भृशम् ।
वङ्गनागायसैस्ताम्रैश्चतुर्भिर्हेमरञ्जनम् ॥ ८१ ॥

---

१. 'मचेद्' क. पाठः. २. 'गं' ख. पाठः.

चतुर्हाटकमित्येतद् द्वयेन स्याद् द्विहाटकम्।
तृतीये त्रिहाटकं विद्यादेतदुत्तरबीजकम् ॥ ८२ ॥

सषट्कपञ्चकं बीजमेवमेनं नियोजयेत्।
पूर्वमेवाभ्रकं चार्यं पश्चात् तीक्ष्णादिमाक्षिकम् ॥ ८३ ॥

जाते हाटकसञ्जीर्णे द्रावितं वेधयेत् ततः।
अतसीबिम्बिकामूले पीलुतैलेन गन्धिते[२] ॥ ८४ ॥

द्रवन्त्याश्च शिफायायां हिङ्गुर्ल्लासम्भवेन च।
चारितं चाभ्रकरसं रसेन सह जारयेत् ॥ ८५ ॥

विडेन सह संयोज्य दीपयन्त्रस्थितं रसम्।
ततस्तीक्ष्णादिमाक्षीकं चारयित्वा तु जारयेत् ॥ ८६ ॥

समं वा द्विगुणं वापि यथाशक्त्या तु जारयेत्।
ततो हाटकसञ्जीर्णं द्रावयेद् दीपिकागतम् ॥ ८७ ॥

तुत्थं वा रसकं वापि रसेन समचारितम्।
दीपिकां तां क्रियाबाह्याः दीपिकान्ताश्च रञ्जनाः ॥ ८८ ॥

तस्माद् दीपं प्रयत्नेन द्रावणे रञ्जने कुरु।
वङ्गं नागायसं ताम्रं स्वैः स्वैरुपरसैः सह ॥ ८९ ॥

मारयेन्मणिवर्गैस्तु विडेन सह योजयेत्।
कृत्वा मूषां स्थिरां स्थाप्य रसकल्कविलेपितम् ॥ ९० ॥

पुनः प्रच्छाद्य तेनैव वर्त्तिं प्रज्वालयेद् बुधः।
ततो द्रक्ष्यति तद् द्रव्यं बालार्कसदृशप्रभम् ॥ ९१ ॥

समबीजं द्रुतं दृष्ट्वा सारितं प्रतिसारितम्।
वेधयेत् ताम्रतारेषु शतांशेन तु योजितम् ॥ ९२ ॥

ततो वेधसमं हेमं कुर्यात् कल्याणमुत्तमम्।
विमलस्तु मणिर्दिव्यो रसः काञ्चनसप्रभम् ॥ ९३ ॥

तमोघ्नं सत्त्वभेदी स्याद् वीर्याद् वैकृन्त(क?)वद् भवेत्।
यत् प्रोक्तं माक्षिकं कर्म विमलस्यापि तद् भवेत् ॥ ९४ ॥

---

१. °कं द्वये°; २. °के' क. पाठः.

विमलं माक्षिकालाभे माक्षिकं[1] विमलं भवेत् ।
द्वयोः समानं कर्मोक्तं विमलस्तु विशिष्यते ॥ ९५ ॥
पक्षच्छेदकरं चैव लोहानां च तमोपहा ।
रसकं गृह्य संशोध्य कण्टकालिरसे शुभे ॥ ९६ ॥
पचेत् सिद्धार्थतैलेन नरमूत्रे महास्रुते ।
जरायुणा वा सुस्त्रीणां प्रच्छाद्य च बहिर्मृदा ॥ ९७ ॥
दहेत् तुषाग्नौ मृदुना पक्व[2]मात्रेण चोद्धरेत् ।
शिखिपित्तेन सम्भाव्य आर्तवे सुनिषण्णके ॥ ९८ ॥
एवं सम्भाव्य रसकं लोहं सन्द्राव्य पूर्ववत् ।
वङ्गनागायसैः शुल्बैर्हेम्ना च द्रावितैः सह ॥ ९९ ॥
बीजं बीजोत्तरं कुर्याद् बन्धं सङ्क्रमरञ्जनम् ।
सस्यकं ताम्रधातुः स्याद् रसः[3] सूतकनिग्रहः ॥ १०० ॥
तक्रे निघृष्टं ताम्राभं सुरया मरतकप्रभम् ।
सस्यकं शिखिपित्तेन दरदं मत्स्यलोहितैः ॥ १०१ ॥
विमलं माक्षिकं चैव मदिरायां तु भावयेत् ।
राजावर्तं शिरीषे तु रसकं चाम्लवेतसे ॥ १०२ ॥
एवं सुभावितं कृत्वा ह्येकैकं[4] माषकं हरेत् ।
हेमस्य नवमाषेण सर्वमन्धीकृतं धमेत् ॥ १०३ ॥
मूषालेपं प्रदत्त्वैतदेकीभव(ति) तत्क्षणात् ।
मक्षिकाणां पुरीषं च गृहधूमं सटङ्कणम् ॥ १०४ ॥
महिषीकर्णजं रुद्धं कोकिलासूत्रसंयुतम् ।
मूषालेपेनान्धयित्वा निर्धमेदविशङ्कितः ॥ १०५ ॥
सर्वमेतदिहावर्त्य सस्यकं बीजमुत्तमम् ।
रसमभ्रकसम्पूर्णं पातितं पातनाविधौ ॥ १०६ ॥
हेमं ताम्रं च सञ्चार्य सस्यकं चारयेत् पुनः ।
यच्चीर्णं[5] सस्यकं बीजं सारितं प्रतिसारितम् ॥ १०७ ॥
विध्याच्छुल्बं[6] सहस्रांशे कृत(त् ? )कल्केन रञ्जितम् ।
चपलो नाम वैकृन्तः स्पर्शमात्रेण विध्यते ॥ १०८ ॥

१. 'का', २. 'क्ष', ३. 'सं', ४. 'ए', ५. 'ञ्ची', ६. 'ल्व' क. पाठः.

वङ्गवद् द्रवते क्षिप्रं निस्तमश्चपलो भवेत् ।
चपलस्य तु षड्भागाः शुद्धनारस्य सप्तमः ॥ १०९ ॥
हेमस्याष्टांशसंयुक्तो नवांशः सूतको भवेत् ।
सर्वमन्धीकृतं मात्रा(?) वङ्गनागशतांशके ॥ ११० ॥
विद्धं तदनु वेधेन तस्य साष्टशतं क्षपेत् ।
एवं विद्धं भवेद्धेम तारं वा नात्र संशयः ॥ १११ ॥
वङ्गेन रजतं विद्धि नागेन कनकं भवेत् ।
तारस्य तु भवेद् भागाश्चत्वारश्चपलस्य तु ॥ ११२ ॥
षोडशं वङ्गमेकस्थं निर्वहेत् तारशेषितम् ।
स्विन्नं क्षाराम्लपित्तेन रसं विमलचारितम् ॥ ११३ ॥
योजयेद् घोषलेपेन तारं विगतकालिकम् ।
क्वचिच्छैलस्तु ताम्रः स्यात् क्वचिदञ्जनसप्रभम् ॥ ११४ ॥
क्वचिच्छङ्खनिभाकारं त्रिविधस्तु महारसः ।
शतवङ्गविनिष्क्रान्तं शतनागविनिर्गतः ॥ ११५ ॥
अरिभिर्मारितो भूयो दशभागावशेषितः ।
हेमतारविनिर्मुक्तो बीजं भवति रञ्जनम् ॥ ११६ ॥
अभ्रसत्त्वेन सहितं न क्वचित् प्रतिहन्यते ।
सहस्रं बीजसंख्या स्यात् तदर्धमपरे विदुः ॥ ११७ ॥
शतषष्टिशतार्धं च प्राहुराचार्यसत्तमाः ।
उत्पलं चम्पकं चैव सुतीक्ष्णं चारविन्दकम् ॥ ११८ ॥
निर्मलं वैष्णवं चैव एकैकं समचन्द्रमाः ।
शैलाष्टाभ्रचतुर्भागं नवमस्थं तु कारयेत् ॥ ११९ ॥
एतद्रसेन सञ्चार्य पातयेति पुनः पुनः ।
एवं सङ्करबीजेन बन्धितो रस उत्तमः ॥ १२० ॥
वेधकेन पुनश्चार्य द्रावितं सारितं पुनः ।
विध्यात् ताम्रसहस्रांशे तारहेमक्रियाः समाः ॥ १२१ ॥
एष संक्षेपतः प्रोक्तः सत्त्वानां हितकारणात् ॥ १२१½ ॥

इति महोदधौ रसोपनिषदि बीजविधानं नाम
चतुर्थोऽध्यायः ॥

---

१. 'क्षोऽस' क. पाठः.

## अथ पञ्चमोऽध्यायः ।

वेधपद्धरसं दिव्यं स्पर्शमात्रेण वेधकम् ।
ज्येष्ठमध्यमयोगेन [illegible] निबोधत ॥ १ ॥

दशभागाभ्रसत्त्वस्य वङ्गभागं दशांशिकम् ।
विमलं दशकं चैव सर्वमेकगतं भवेत् ॥ २ ॥

निर्वाहयेत् सर्वमेतद् यावद्भागं सपादिकम् ।
तद्रसं तारसंयुक्तं समं निर्वाहयेच्छनैः ॥ ३ ॥

तारावशेषं निर्धान्तं द्विगुणं चारयेद् रसम् ।
हेमपादं ततो दत्त्वा मातुलुङ्गफलाम्बुना ॥ ४ ॥

चारितं सप्तरात्रेण द्रावितं द्रावणाविधौ ।
सश्चायोपरसैरेभिः स्विन्नं तन्मासमेकतः ॥ ५ ॥

दरदं तुत्थतालं च चूलिकाञ्जनसैन्धवैः ।
विषगन्धशिला चैषामेकैकं पादमात्रया ॥ ६ ॥

एवमेकगतं स्विन्नं[2] लेपयेद् घोषभाजनम् ।
लिप्त्वा तं शीतले स्थाप्य सप्ताहं पुनरुद्धरेत् ॥ ७ ॥

शशिकुन्दोपमं तारं तापशुद्धं सुपाण्डरम् ।
निर्बीजं कुरुते क्षिप्रं स्पर्शवेधी महारसः ॥ ८ ॥

दशभागाभ्रसत्त्वस्य नागभागं दशांशिकम् ।
विमलं दशकं चैव सर्वमेकगतं धमेत् ॥ ९ ॥

निर्वहेत् सर्वमेतत्तु यावद्भागं सपादिकम् ।
तद्रसं हेमसंयुक्तं समं निर्वाहयेच्छनैः ॥ १० ॥

हेमावशेषितं ध्मान्तं[3] नितान्तं चारयेद् रसम् ।
तारपादं ततो दत्त्वा मातुलुङ्गफलाम्बुना ॥ ११ ॥

पूर्वोक्तैः रसैरेभी रक्तवर्गैः सुपेषितम् ।
एवं मासगतं स्विन्नं लेपयेदारपत्रकम् ॥ १२ ॥

---

१. 'न्ते', २. 'लैः', ३. 'न्तं द्विगुणं चा' क. पाठः. ४. 'रसाम्बु' ख. पाठः.

लिप्त्वा तं शीतले स्थाप्य सप्ताहा[illegible] चोद्धरेत् ।
एवं स्निग्धं भवे + + ज्जाम्बूनदसमप्रभम् ॥ १३ ॥
एष संक्षेपतः प्रोक्तः सत्त्वानां बीजसम्भवः ।
पातनाल्लोहकरणं विस्तरं [illegible] ॥ १४ ॥

इति महोदधौ [illegible] नाम
पञ्चमोऽध्यायः ॥

---

## अथ षष्ठोऽध्यायः ।

अभ्रं जीर्णं त्वजीर्णं वा बन्धनं रञ्जनं यथा ।
तथाहं सम्प्रवक्ष्यामि लघूपायं रसाङ्कुशम् ॥ १ ॥
अवाच्यं सर्वतन्त्रा(णा)मवेद्यं वेदवद् बुधैः ।
न देयं पापशीलाय नापुत्राय कदाचन ॥ २ ॥
रसको नाम वैक्रान्तो यथा लोहं पतिष्यति ।
वङ्गवत् स्याल्लघुद्रावी सत्त्वभेदी च निस्तमः ॥ ३ ॥
अहिच्छत्रोद्भवं श्रेष्ठं रसकं गुलसन्निभम् ।
ऐहिकापथमेवापि यथालाभं समानयेत् ॥ ४ ॥
रसकस्य यथालाभं सूक्ष्मचूर्णं तु कारयेत् ।
भल्लातकानि गोमूत्रे स्वेदयेत् क्षारमिश्रिते ॥ ५ ॥
क्वाथयित्वा परिस्राव्य रसकं तेन मर्दयेत् ।
भावयित्वा शतं पश्चात् कण्टकालीजलेन तु ॥ ६ ॥
कङ्कुष्ठाज्यमधूच्छिष्टं हिङ्गु सर्जरसं तथा ।
शृङ्गचूर्णं सलवणं क्षारमूत्रेऽपि पाचयेत् ॥ ७ ॥
मनुष्यकेशान् सङ्गृह्य महाकोशातकीरसे ।
भावितं शतशो भूयो भल्लातकगुलेन च ॥ ८ ॥
प्रक्षिपेत् तैलभाण्डे तु टङ्कणेन विमिश्रिते ।
स्थापितं छिद्रयन्त्रे तु पातयेत् तैलमुत्तमम् ॥ ९ ॥

---

१. 'सिद्धं भ', २. 'ष्ठि' क. पाठः,

टङ्कणं कक्षचूर्णं च द्रवदालीरसप्लुतम् ।
स्थापितं पक्षमात्रं तु तैलभाण्डे च पातयेत् ॥ १० ॥

एतत्सर्वं प्रयोगेषु पातयेद् द्रावणाविधौ ।
अभ्रस्य चारणे चैव जारणे चैव सर्वशः ॥ ११ ॥

जालयेत् तदलाभे तु जालिनीनां भवेद् रसे ।
तैलनानेन चालोड्य वज्रवल्लीसुभावितम् ॥ १२ ॥

माषचूर्णं सलाक्षं च गोकिटं टङ्कणान्वितम् ।
स्नुह्यर्कगोतनक्षीरे पिण्डीबन्धं तु कारयेत् ॥ १३ ॥

मूषायन्त्रेण यत्नेन पातयेल्लोहमुत्तमम् ।
पतितं तु महासत्त्वं भिन्नाञ्जनसमप्रभम् ॥ १४ ॥

पलानि दश सङ्गृह्य समहेम्ना तु चूर्णयेत् ।
पारदेन समं कृत्वा फलाम्लेन तु मर्दयेत् ॥ १५ ॥

यथा मूषां स्थिरां स्थाप्य समं तारं प्रलेपयेत् ।
दशतारसहस्रेण मतिमानन्धमूषया ॥ १६ ॥

चूर्णपारतयुक्तेन खादिरैस्तु प्रयत्नतः ।
संस्थाप्य द्रावयेन्मूषां सप्ताहात् पुनरुद्धरेत् ॥ १७ ॥

रसविद्धं तदा पश्येज्जाम्बूनदसमप्रभम् ।
विद्यात् तं बीजमेतद्धि सहस्रांशे तु तन्न्यसेत् ॥ १८ ॥

ततो वेधितमात्रेण भवेद्धेमं न संशयः ।
एष एव तु सम्प्रोक्तो माक्षिकस्यापि पातने ॥ १९ ॥

विशेषान्नररुधिरमेरण्डतैलेन योजितम् ।
सप्तानां रसधातूनामेष एव क्रियाविधिः ॥ २० ॥

रसस्य रञ्जनार्थाय लोहानां रञ्जनाय च ।
लोहीकृतास्तु षड्लोहैरन्धमूषीगतं धमेत् ॥ २१ ॥

एकीकृतं रसेन्द्रेण चारितं जारितं पुनः ।
तानेवं हेमनिर्व्यूढं बीजं बीजोत्तरं कुरु ॥ २२ ॥

---

१. 'से', २. 'वं', ३. 'किटङ्कणकान्वि', ४. 'द्धं', ५. 'न्ध्र नि', ६. 'प्राह्य वा', ७. 'शेन त', ८. 'तं पातितं', ९. 'वेहनि' क. पाठः.

द्रावितं द्रावणविधौ रसान्ते नागवङ्कग्रहः ।
पूर्वोक्तविधिना कुर्यात् क्षिप्रमेव तु सिध्यति ॥ २३ ॥

विशेषोऽपि भवेद् यस्मात् तदिदं गुह्यमुच्यते ।
पतितं माक्षिकं लोहं हेमेन सह योजितम् ॥ २४ ॥

महिषीकर्णजं चैव दन्तचूर्णं सटङ्कणम् ।
सर्वेषामेव चास्थीनि मेषशृङ्गं सगुञ्जकम् ॥ २५ ॥

स्त्रीस्तन्यपेषितं लिप्तमन्धमूषागतं द्रुतम् ।
सूतकस्याष्टभागेन चारितं जारितं पुनः ॥ २६ ॥

कृष्णपुष्पंरसे चैव क्षीरेण विपरञ्जिना ।
लुलितं चीरया पेष्य डोलास्वेदेन योजयेत् ॥ २७ ॥

स्वेदितं चाष्टभागेन तुर्यांशेन च चार्य च ।
पुनः संस्वेदयेद् रात्रौ समंवारि यदा भवेत् ॥ २८ ॥

बीजेन सारितं भूयः प्रतिसारितमेव च ।
विंशांशेन तु तारस्य वेधयेत विधानतः ॥ २९ ॥

आयुष्यार्थं ततो हेमं नवमं वापि दापयेत् ।
यदिदं माक्षिकस्योक्तं तदेव विमलस्य तु ॥ ३० ॥

शैलस्यापि रसेन्द्रस्य पातने विधिरुच्यते ।
सर्वोपविषवर्गैश्च धान्यैरतुषसम्भवैः ॥ ३१ ॥

भावितं स्नेहवर्गेण नागं नागाष्टमांशिकम् ।
पातयेत् पातनायन्त्रे शैललोहं महासरम् ॥ ३२ ॥

द्विविधं हेमयोग्यं तु श्वेतं तारस्य कर्मणि ।
शैललोहाभ्रलोहं हि नागे निर्वाहितं शतम् ॥ ३३ ॥

शिलायां पावितं शुद्धं हेमे दश विलापितम् ।
तारपातेन संयुक्तं चरेद् रसवरे शुभे ॥ ३४ ॥

द्रावितं समबीजेन सारितं प्रतिसारितम् ।
वेधयेत् तत्सहस्रांशे तारेपिष्टे न संशयः ॥ ३५ ॥

---

१. 'त्तमम्' क. पाठः. २. 'ष्पसर' ख. पाठः. ३. 'ञ्ज', ४. 'चुलीतं चि', ५. 'चारी य', ६. 'ल', ७. 'हारसम्', ८. 'चापितं', ९. 'रारिष्टे' क. पाठः.

एतद्विद्धं भवेद्धेमं शातकुम्भसमप्रभम् ।
एवमेव रजतस्यापि वङ्गं निर्वाहितं शतम् ॥ ३६ ॥

ताम्रं तु वेधयेत् तारं सारितं प्रतिसारितम् ।
अष्टौ शैलरसेन्द्रस्य नव तारस्य दापयेत् ॥ ३७ ॥

द्वात्रिंशवङ्गनागाभ्यां तथा विमलतीक्ष्णयोः ।
सर्वमेकीकृतं धातं यावत्तारावशेषितम् ॥ ३८ ॥

सूतकेन समायुक्तं शतांशेन तु विध्यति ।
चपलस्तु लघुद्रावी वङ्गवद् द्रवते पुनः ॥ ३९ ॥

सस्यकस्ताम्रवद् द्रावे बहुलोहसुरक्तकः ।
षण्णामेव तु सम्मिश्रं सत्त्वं पतितपारदम् ॥ ४० ॥

एवं सम्पादयित्वा तु बीजकर्म समारभेत् ।
बीजाद्बीजोत्तरांश्चैव अङ्कुशं तु यथेष्टतः ॥ ४१ ॥

कृत्वा सिद्धिमवाप्नोति क्षिप्रमेव न संशयः ।
हेमाभ्रसत्त्वं वङ्गं च द्रुतबीजं रसे क्षिपेत् ॥ ४२ ॥

त्रिभागं लवणं कूपं वापं दत्त्वा पुनः पुनः ।
हेमेन सह सन्द्राव्य वैष्णवं सत्त्वमावपेत् ॥ ४३ ॥

द्विभागशेषं ज्ञात्वा तु तारलोहनिपातितम् ।
अर्धेन गोमयं क्षिप्तं शिलालोहनिपातितम् ॥ ४४ ॥

एकभागस्थितं शुद्धमङ्कुशं परमं शुभम् ।
रञ्जनं च रसेन्द्रस्य स्तोकं स्तोकं प्रपेपितम् ॥ ४५ ॥

द्रावितं द्रावणविधौ समषड्गुणमेव वा ।
सारितं समहेमेन शतसाहस्रवेधकम् ॥ ४६ ॥

वेधितं कनकं भाति भास्करप्रतिभासुरम् ।
चपलं सत्त्वमादाय तैलसिन्धुनि वापितम् ॥ ४७ ॥

शुद्धं तु तैलं द्विगुणं हरितालेन वापितम् ।
यत्स्थितं भागमादाय तारभागेन योजयेत् ॥ ४८ ॥

---

१. 'पि' ख. पाठः. २. 'पतति पा', ३. 'द्धमिवाप्नो', ४. 'धानवित्',
५. 'भवेत् ।' क. पाठः. ६. 'च', ७. 'तं', ८. 'कः' ख. पाठः. ९. 'वै' क. पाठः.

तारावशेषितं ध्मातं तालयुक्तं ससैन्धवम्[1] ।
तत्पादहेमनिर्धान्तं रसेन्द्रेण तु चारितम् ॥ ४९ ॥
जारयेन्मणितुल्यं तु रसैरुपरसैः शुभैः ।
मणिभिर्वापयेत् प्राज्ञश्छिन्नपक्षं[2] महारसम् ॥ ५० ॥
स्थापयेत् तैलभाण्डे तु द्रावणेनैव विडेन तु ।
स्थापितः कनके लोहे तैलबिन्दुरिवाम्भसि ॥ ५१ ॥
एवं ताम्रे शतांशेन वेधयेद् रसमुत्तमम् ।
चपलस्य भवेद् भागो रसभागद्वयं तथा ॥ ५२ ॥
हेमषड्गुणमन्वित्वा लेपयेदौषधैरिमैः ।
चीरकं[3] करवीरं च लाङ्गली गृध्रविट् तथा ॥ ५३ ॥
स्तनक्षीरेण पिष्टैस्तु नागवेधशतांशतः ।
तन्नागं ताम्रशतके वेधयेत्तु विचक्षणः ॥ ५४ ॥
विद्धमात्रेण कनकं निर्बीजं सिद्धयोगतः ।
सस्यकं ताम्रजं लोहं तारवेधी शतांशके ॥ ५५ ॥
हेमेन सह निर्धान्तं यावद्धेमावशेषितम् ।
एवं दशसु निर्धान्तं बीजकर्म समारभेत् ॥ ५६ ॥
चारयीत रसेन्द्रेण द्रावयेद् द्रावणाविधौ ।
पूर्वशुद्धं रसं पक्वमिष्टांशेन तु चारितम् ॥ ५७ ॥
आयसे कर्परे स्विन्नं तापयेत् सूर्यरश्मिभिः ।
हिङ्गुसैन्धवसम्मिश्रं फलाम्लमधुमर्दितम् ॥ ५८ ॥
समं च द्रावितं तारे शतांशेन तु विध्यति ।
रसो हेमासक्तं शतगुणगजाक्रान्तविमलो
रसे क्षीणे ज्येष्ठे ह्यसकृदमलं काञ्चनयुतम् ।
मुहुः स्विन्नो वह्नौ विषरसयुतो रक्तमृदितः
सकृल्लेपात् तारं शतमपि करोत्येव कनकम् ॥ ५९[4] ॥

इति महोदधौ रसोपनिषदि लोहकरणं नाम
षष्ठोऽध्यायः ॥

---

१. 'न्तं तैलसंयुक्तसैन्धवैः ।', २. 'क्ष' क. पाठः. ३. 'नि' ख. पाठः. ४. 'चित्रकं' क. पाठः.

## अथ सप्तमोऽध्यायः ।

पक्षच्छेदकरं वक्ष्ये लोहानां रञ्जनं प्रति ।
येन संयोगतो लोहं रञ्जनं च नियच्छति ॥ १ ॥

स्वभावो रक्तता ताम्रे शौक्ल्यं तारे व्यवस्थितम् ।
शौक्ल्यं काष्ण्र्यसहितं वङ्गनागे प्रपठ्यते ॥ २ ॥

वर्णान्तरविपर्यासो न शक्यस्त्रिदशैरपि ।
कर्तुं वितथचेष्टस्य मनुष्यस्य कुतः पुनः ॥ ३ ॥
लोहैरुपरसैश्चापि रसैस्तद्वन्महारसैः ।
मूलिभिः शुष्कबीजैश्च लोहं रज्येत नैकधा ॥ ४ ॥
पिण्डं प्रतिवसेत् पूर्वं निषेकौषधिभिर्द्रुते ।
लोहोपरसवापेन रसशुष्केण वा पुनः ॥ ५ ॥
शुष्कबीजेन वा विध्यादुत्तमेन रसेन वा ।
पत्रसन्यासविधिना क्षारतुत्थविशोधितम् ॥ ६ ॥
बीजोपविषवापेन सुरायां तु निषेचितम् ।
मृदुत्वकरणैर्योगैः स्नेहमूत्रविशोधनैः ॥ ७ ॥
एवं संशोधितं सर्वं रज्यते बध्यते पृथक् ।
ज्येष्ठमध्यमयोगेषु दोषान्नाशयते रसः ॥ ८ ॥

दुर्बलो वा स गुणवान् क्षेत्री गृह्णाति कालिकम् ।
वङ्गनागेन्दुसूर्याणां रञ्जनाविधिरुच्यते ॥ ९ ॥
पूर्वशुद्धानपि रसान् रसांश्चोपरसान् मणीन् ।
भावयेत् स्वेदयेच्चैव मर्दयेच्च महौषधैः ॥ १० ॥
पक्षच्छेदं प्रपद्यन्ते रञ्जनानि विशेषतः ।
षण्णामेव तु लोहानां रञ्जनं बहुधा स्मृतम् ॥ ११ ॥
रक्तं पीतं तथा श्यामं कृष्णं वा सङ्करं च यत् ।
वक्ष्ये चानुक्रमेणैव नागरञ्जनमुच्यते ॥ १२ ॥
सुवाष्पिकां शक्रयवं पलाशं पूतिजालिनीम् ।
नागमूत्रेण संस्राव्य पञ्चानां दग्धभस्मना ॥ १३ ॥

---

१. 'प्रिये ।', २. 'न', ३. 'वतो र', ४. 'श्लक्ष्णबी', ५. 'ता' क पाठः. ६. 'ता' ख. पाठः.

कोशातकीपलाशानां बीजं नृपरि सैन्धवम् ।
एभिर्नागं प्रतीवाप्य क्षारसूत्रे निषेचयेत् ॥ १४ ॥

एवं शुद्धं भवेन्नागं शङ्खेन्दुकुमुदप्रभम् ।
एकविंशतिभिर्वारैर्वाप्य वाप्ये निषेचयेत् ॥ १५ ॥

महाकोशातकीपुष्पैर्भावितं शतशो रसे ।
वापितं प्रतिवाप्यैवं निषिञ्चेच्छाकजे रसे ॥ १६ ॥

शाककिञ्जल्कसुरसे शतशो भावितं पुनः ।
पारदं प्रतिवाप्यैवं कङ्कुतैले निषेचयेत् ॥ १७ ॥

पत्तङ्गं रजनी द्वे च मञ्जिष्ठी खदिरं तथा ।
रक्तानि शाकसहितं शिलापारदसावनम ॥ १८ ॥

एभिस्तु निर्वपेद् रक्तं माक्षिकं सुसमाहितम् ।
एवं नागं भवेद् रक्तं चामीकरसमप्रभम् ॥ १९ ॥

रसस्य भागं रसकस्य भागं गन्धार्धभागं विषपादयुक्तम् ।
ताम्रे तु पात्रे दधिमस्तुपिष्टं चीनस्य भागांश्चतुरो गृहीत्वा ॥

त्रिसप्तरात्रं तिलतैलमिश्रं सङ्घृष्य भूयः सह सर्वमेतत् ।
एकीकृतं चान्धगतं निधान्तं नागं भवेद्धाटकसन्निकाशम ॥ २१ ॥

उलूखले क्षोदयित्वा संयोज्य यवचर्चिताम् ।
कान्तस्य रसमादाय भावयेत्तु मनःशिलाम् ॥ २२ ॥

ततो माषतिलैर्वाप्य क्षारमूत्रे निषेचितम् ।
एवं पूर्वविशुद्धं तु नागं पत्राणि कारयेत् ॥ २३ ॥

शिलाकल्केन लिप्तानि पुटे तानि विपाचयेत् ।
शनैर्मृद्वग्निना पक्वं + + + + + + + + ॥ २४ ॥

चूर्णीकृतास्वनेकासु यावत् कनकसन्निभम् ।
नागे नागेन कुर्वीत भूषणानां विशेषतः ॥ २५ ॥

मनःशिलापारदकाक्षिगैरिकं ससैन्धवं चाश्मनृपाख्यसंयुतम् ।
कृत्वा तु कल्कं रमणीयभूतले दिनानि सप्ताष्टभिरुद्धरेत च ॥ २६ ॥

---

१. 'शङ्खकुन्देन्दुसन्निभम् ।', २. 'का' क. पाठः. ३. 'भेज ना' ख. पाठः.
४. 'श्मि' क. पाठः.

स वापमात्रेण करोति कुञ्जरं सुतप्तचामीकरतुल्यवर्चसम् ।

दशभागस्थितं वङ्गं दशवारं पुनः पुनः ।
दशभागैकभागेन पारदेन सुरञ्जितम् ॥ २७ ॥

निषिञ्चेद् रक्तसुरया वङ्गं रञ्जति हेमताम् ।
तद्धेमं + + + + + + + + + + शेषितम् ॥ २८ ॥

तत्तारं पञ्चमांशेन हेमनैकेन योजितम् ।
तद् भवेत् काञ्चनं दिव्यं कल्याणमातृकोपमम् ॥ २९ ॥[1]

+ + + + + + + + कर्षं कर्षं प्रदापयेत् ।
प्रक्षिपेत् तैलभाण्डे तु नरमूत्रेण संयुतम् ॥ ३० ॥

अजलण्डसुपूर्णायां गर्तायां स्थापयेत् तु तम् ।
तं रेणु+विषं लाक्षा गुलं जिह्वा सटङ्कणम् ॥ ३१ ॥

विमलं[2] चेति सर्वेषामेकैकस्य पलं पलम् ।
पञ्चैवं[3] पारतं दद्यात् सर्वमेकीकृतं पुनः ॥ ३२ ॥

हरिद्रया रसेनैव खदिरासनसंयुतः ।
सर्पाक्षी कण्टकाली च कटुतैले मुहुर्मुहुः ॥ ३३ ॥

ज्योतिष्मत्याश्च तैले च ताप्य सिञ्चेत् त्रिसप्तधा ।
लेपितं स्थापयेद् भूमौ निर्बीजं हेममुत्तमम् ॥ ३४ ॥

बीजस्य द्रावणं वक्ष्ये तैले[4] चाङ्गुष्ठमर्दनात् ।
सुकरं बीजकरणं + + + + दधिस्थितम् ॥ ३५ ॥

+ + + + + + + सम्यग्घर्मेन सह निर्वहेत् ।
हेमा(व)शेषं निर्धान्तं निषिञ्चेद्रसनारसे ॥ ३६ ॥

एवं शतार्धवारांस्तु ततः पत्रीकृता त्रिका ।
श्यामा शशतृणं चेति ततः कनकबन्धनी ॥ ३७ ॥

एतेनानेन संवेष्ट्य[5] हस्ते द्रावं तु कारयेत् ।
तन्मध्ये पेषयेत्+ + + + + + + + + + + ॥ ३८ ॥

रसं च चटुके स्थाप्य गोजिह्वारससंयुतम् ।
संस्वेद्य निर्मलीभूतं स्थापयेत् काचभाजने ॥ ३९ ॥

---

१. 'णमामृको', २. 'विलं', ३. 'व', ४. 'लमाङ्ग', ५. 'पेष्य' क. पाठः.

+ + + + + + + + पलस्य माषकं चरेत् ।
आयुष्यार्थं ततो हेमं यथाशक्त्या तु दापयेत् ॥ ४० ॥

कटुतैले निषिक्तं तु सुरक्तं हेममुत्तमम् ।
एतेनैव विधानेन मध्यमेन च योजयेत् ॥ ४१ ॥

पक्षच्छेदकृतं तालं कल्कं कुर्यात्तु पूर्ववत् ।
वङ्गाभ्रविमलं क्षीणं तारे निर्वाहयेत् समम् ॥ ४२ ॥

तत्तारं द्रावितं हस्ते ताम्रे विध्यात्तु पूर्ववत् ।
तालकं पटलाभासमृदुः कनकसप्रभम् ॥ ४३ ॥

विषेण नरमांसेन स्थापयेत् तद्[1] द्विमासिकम् ।
ततः पक्षशतं गृह्य रसेन सह वेधयेत् ॥ ४४ ॥

ताम्रस्यापि पलस्यैतन्माषकं निर्वपेद् बुधः ।
टङ्कणेन च मूलेन काचेन सह मर्दितम् ॥ ४५ ॥

निषिञ्चेदाम्रसुरया गोजिह्वारससंप्लुते ।
एवं पूर्वविशुद्धस्य रसं विध्याद् विचक्षणः ॥ ४६ ॥

विद्धं सुरज्यते तालं विपरीतं न सिध्यति ।
कृष्टीनां रञ्जनं चैव विधिदृष्टेन कर्मणा ॥ ४७ ॥

अर्धपत्रादियोगेषु रसोच्छिष्टक्रियां शृणु ।
वङ्गनागायसं लोहं हत्वा स्वरिपुमूलिभिः ॥ ४८ ॥

शिलापारदतैलैस्तु मणिवर्गयुतैरपि ।
सैन्धवं सयवक्षारं स्वर्चिकारोचनायुतम् ॥ ४९ ॥

+ + + + + + + + + + + + + + यथा ।
लाभं च रञ्जनक्षारे पुटेन मृदु पाचयेत् ॥ ५० ॥

तत्ताम्रे निर्वहेत् प्राज्ञः समं द्विगुणषड्गुणम् ।
निषिञ्चेद् रक्तसुरया शृङ्गबेररसेन वा ॥ ५१ ॥

कृष्टिरेषा विशुद्धा स्याद् रञ्जनं चोत्तरं भवेत् ।
पूर्वशुद्धान् रसवरान् भावितान् भावनाविधौ ॥ ५२ ॥

---

१. 'द्वि मा', २. 'ग', ३. 'ज्ञि' क. पाठः.

विमलं रसकं चैव शिलाहेमाभ्रटङ्कणम् ।
सैन्धवं गन्धपाषाणं विषं सूतकरोचना ॥ ५३ ॥

त्रीहिका विषमुस्ताभ्यां चारयित्वाथ वै पुनः ।
संस्वेद्य सप्तरात्रं तु ताम्रपत्रं प्रलेपयन् ॥ ५४ ॥

त्रिपुटेन हतं तार समं निर्वाहयेच्छनैः ।
कदलीकिंशुकक्षारे निषिञ्चेद्धमतां व्रजेत् ॥ ५५ ॥

बीजपूरविद्धदरदं हिङ्गुलं चतुर्थांशेन योजितम् ।
चतुर्थसारं कनकं दिव्यं तत्सात्तृकासमम् ॥ ५६ ॥

विमलस्तु रसो दिव्यः स वै काञ्चनसप्रभः ।
योजयेत् तुल्यकाभ्यां तु सिन्धुकासीसगैरिकैः ॥ ५७ ॥

स्वर्चिपारदसुक्तेन कुनटीटङ्कणेन च ।
कङ्कुष्ठरोचनासूतलाक्षामाक्षिकभागिकैः ॥ ५८ ॥

यावदेव भवेत् सर्वं तावद् विमलको रसः ।
आम्लैः पित्तैश्च मूत्रैश्च शालिपर्णीसुमुस्तकैः ॥ ५९ ॥

भूमीकुरन्मूलेन स्वेदितो मर्दितस्तथा ।
मासस्विन्नस्तु नागेन शतांशेन तु वेधयेत् ॥ ६० ॥

बद्धमात्रेण तु भवेद् गुञ्जावर्णसमद्युतिः ।
तेन विद्धं तु तारं स्याद् विंशांशेन तु हेमता ॥ ६१ ॥

दशमांशेन हेमेन भवेत् कल्याणमुत्तमम् ।
ताम्रं तु वेधयेद्धेमं दशांशं रक्तहाटकम् ॥ ६२ ॥

जातिहिङ्गुलिकं सम्यग् गोमूत्रेण तु भावयेत् ।
शिखितुत्थं नृमूत्रेण विमलं च दशांशिकम् ॥ ६३ ॥

भावयेद्धेमकाचं चाप्यर्कपत्ररसेन हि ।
विमलं पारदं चैव मनुष्यरुधिरेण च ॥ ६४ ॥

विमलं पारतसमं तत्समं शिखिकण्ठजम् ।
तुत्थस्य भागाश्चत्वारस्ताम्रं शुद्धं सुपत्रितम् ॥ ६५ ॥

१. 'ष्ट', २. 'शाहिक' क. पाठः. ३. 'श्च' ख. पाठः.

मूलक्षुकरसं पिष्टं पत्राण्यालिप्य बुद्धिमान् ।
पुनर्विमलकल्केन लिप्त्वा काचेन लेपयेत् ॥ ६६ ॥

अन्धमूषागतं धान्तं यावद् द्रुतमशेषतः ।
विंशांशेन ततो हेमं दद्यादायुष्यवर्धनम् ॥ ६७ ॥

वज्रामलौ समौ कृत्वा तथा तालकमेव च ।
दरदस्य तथा भागं[1] सर्वमेकगतं धमेत् ॥ ६८ ॥

पूर्वशुद्धरसेन्द्रेण हस्तेनाङ्गुष्ठमर्दनात्[2] ।
निक्षिपेत् पद्मदण्डस्य मूलं क्षुण्णंमुखाम्बुना ॥ ६९ ॥

द्रावितं स्नुहिजे पक्कं तालपत्रेण वेष्टितम् ।
पलस्य माषकं विद्यात् ताम्रं क्षत्रीकृतं शुभम् ॥ ७० ॥

विद्धं च रसकल्केन वापं लेपमथापि वा ।
षोडशांशेन हेमेन संयुक्तं वाधितं परम् ॥ ७१ ॥

विमलं काञ्चनाभासं तीक्ष्णेन सह योजितम् ।
द्विगुणं कृष्टिशुल्बं च मूकमूषागतं द्रुतम् ॥ ७२ ॥

चारयेत् स्वेदयेच्चैव सप्तवारं फलाम्लजे ।
विषमुस्तारसेनैव शालिपिण्यारसैस्तथा ॥ ७३ ॥

स्वेदितं कल्कमुद्धृत्य तारनागविनिर्गतम् ।
वापयेत् त्रुटिमात्रेण यावत् कनकसप्रभम् ॥ ७४ ॥

स्नेहवर्णाभिवृद्धौ च हेमाष्टांशेन योजयेत् ।
कालान्तरगतं पक्षं मातृकासमतां व्रजेत् ॥ ७५ ॥

त्रिभागरससम्पिष्टं बीजमालिप्य पत्रितम् ।
ताम्रशुद्धं सुपक्कं तु लेपयेत् तुल्यकल्कजम् ॥ ७६ ॥

यवचार्चिरसे तुल्थं भावयेत् षोडशान्तिकम् ।
गुलेन सार्षपे तैले पक्कमन्धीकृतं शुभम् ॥ ७७ ॥

द्रावयित्वा त्रिसप्ताहं स्थापितं पुनरुद्धरेत्
हेमभागं यथाशक्त्या योजितं कनकं शुभम् ॥ ७८ ॥

---

१. 'गः', २. 'से', ३. 'ष्णं', ४. 'र्गा', ५. 'म्रं', ६. 'न' क. पाठः.

एष रञ्जनकल्कानां विधिरुक्तो विशेषतः ।
संशुद्धहेमताराभ्यां गोलकद्वयमुच्यते ॥ ७९½ ॥

इति महेन्द्रधा रसोपनिषदि पञ्चच्छेदकृते रञ्जनकल्कविधिर्नाम
सप्तमोऽध्यायः ॥

---

## अथाष्टमोऽध्यायः ।

मृतस्याभ्रकचूर्णस्य पलानां पञ्चकं हरेत् ।
सूतकश्चाभ्रकसमो हिङ्गुः कर्षाधिकं पलम् ॥ १ ॥
अभ्रकं श्वेतहिङ्गुं च चारयेच्चतुरंशिकम् ।
वज्रस्नुहेस्तु क्षीरेण यावदेकत्वमागतम् ॥ २ ॥
त्रिंशद्भागं तु कर्तव्यमभ्रचूर्णं महारसम् ।
एकैकस्मिंस्तु दिवसे भागमेकं तु चारयेत् ॥ ३ ॥
एवं वज्रस्नुहिक्षीरैरेकतः सम्प्रमर्दितम् ।
संस्वेदयेदहोरात्रं डोलायन्त्रे प्रतिष्ठितम् ॥ ४ ॥
मासेन सिद्धिमाप्नोति कर्मण्यग्निशिखासहः ।
चारणादभ्रचूर्णस्य समजीर्णो यदा भवेत् ॥ ५ ॥
आवर्त्य वङ्गं श्वानास्थि वापयेत् कूर्मसंयुतम् ।
शुध्यते दशभिर्वापैरनन्तायां निषेचितम् ॥ ६ ॥
अभ्रचूर्णं समं तारं मूषां कृत्वान्धमूषितम् ।
तत्समं वङ्गमूषायां स्थापितं साधितं पुनः ॥ ७ ॥
हरितालेन चाभ्रेण सोञ्जनेन च सिन्धुना ।
लाक्षाचूर्णेन सुधया गोलकं त्वग्निना धमेत् ॥ ८ ॥
एवमेकगतं स्विन्नं माषकं वापयेत् पले ।
निर्बीजं कुरुते ताम्रं शुद्धं तारं सुपाण्डरम् ॥ ९ ॥
एवमेव तु हेमेऽपि नागं तुल्येन वेष्टितम् ।
वेधयेद् रजते शुद्धे विद्धं कनकमुत्तमम् ॥ १० ॥

---

१. 'न्धि' क. पाठः. २. 'चा' ख. पाठः.

सुकरं गोलकरणमभ्रकोपायमुत्तमम् ।
तत्क्षणादेव संभक्ष्य चीर्णजीर्णो भवेद् रसः ॥ ११ ॥
अन्यं च गोलकं वक्ष्ये गुरुणोदधिपूजितम् ।
विंशद्भागावशिष्टेन वङ्गेन रसबन्धनम् ॥ १२ ॥
माक्षिकं विमलं लोहं शैलं वा रक्तकृष्णजम् ।
अभ्रं वा तदभावेन वापं दत्त्वा सुनिर्मलम् ॥ १३ ॥
वङ्गाष्टौ तत्समांशेन दशस्थं शेषमावहेत् ।
तत्समेन रसेन्द्रेण पेषयेद् यावदेकताम् ॥ १४ ॥
तीक्ष्णाद्वितीयं त्रिगुणं तथारं नागं च तुल्यं कनकस्य पञ्च ।
षडेव तारस्य सहान्धयित्वा निर्वाहयेन्मध्यमहेमशेषम् ॥ १५ ॥
तद्बीजमूषां विनिवेशयीत किट्टादिना चान्धगतं सुबद्धम् ।
सुवज्रतुल्ये विनिवेश्य गुप्तं संस्वेदयेत् पांसुनि तत् त्रिरात्रम् ॥१६॥
संस्विन्नमेतत् सहगोलकं स्यात् तारं शतांशेन तु वेधयीत ।
तद्विद्धमात्रेण सुवर्णनाभं स्याद् विंशभागेन भवेत् सुहेमम् ॥ १७ ॥
संशुद्धताम्रं च शतांशकेन विद्धं प्रकुर्यात् कनकं दशांशे ।
आरं च नालेन सहान्धयीत शतांशविद्धं कनकं शतांशे ॥ १८ ॥

इति महोदधौ रसोपनिषदि गोलकविधानो नाम
अष्टमोऽध्यायः ॥

---

## अथ नवमोऽध्यायः ।

सर्वेषामेव बन्धानामौषधं तूत्तमं स्मृतम् ।
तस्मादौषधमास्थाय बन्धनं प्रविचारयेत् ॥ १ ॥
धराकुरबमूलं च मुस्ता रक्तासनं बला ।
पलाशं रक्तचित्रं च मूत्रस्नेहेन पाचयेत् ॥ २ ॥
पाचितेन कषायेण रक्तपुष्पेण चारयेत् ।
चारितं सूतकरसं दृढवस्त्रेण बन्धयेत् ॥ ३ ॥

---

१. 'जः' क पाठः. २. 'पनेत्' ख. पाठः. ३. 'ज्ञानां चा', ४. 'हं',
५. 'न्धितम् ॥' क. पाठः

बन्धिनं स्वेदयेद् गर्त्तौ समेतान् सर्वमूत्रजे ।
प्रक्षिपञ्च यथालाभं मौक्तं मानुजं तथा ॥ ४ ॥

एवमेव त्रिसासेन रसनक्षिसदं विदुः ।
अग्निष्ठं तु ततो ज्ञात्वा बीजकर्म समारभेत् ॥ ५ ॥

पलाशासनपुष्पाणामादकाढकमावहेत् ।
द्रोणेन पिकमूत्रेण पाचयेद् बहुलं यदा ॥ ६ ॥

तापशुद्धं ततो हेममाकरोद्धृतमानयेत् ।
पत्रीकृत्य पुटं दद्याद् रक्तपुष्पं ससैन्धवम् ॥ ७ ॥

पलाशासनकषायेण शतशो भावितं पुनः ।
प्रवाप्य बहुशो यावत् प्रवालाङ्कुरसन्निभम् ॥ ८ ॥

निषिञ्चेच्छागसुरसे दशाष्टावेकविंशती ।
एतद्धेमं भवेद् रक्तमिन्द्रगोपसमप्रभम् ॥ ९ ॥

एतद्बीजं महागुह्यं रसराजेन मारयेत् ।
सारितं वेधयेत् ताम्रं विंशांशेन सुरञ्जिते ॥ १० ॥

ततो + वेधयेद्धेमं दद्यात् कल्याणमुत्तमम् ।
शीतस्थाने त्रिसप्ताहं स्थापयेन्मतिमान् नरः ॥ ११ ॥

त्रिसीसोधिगते ताम्रे रक्तपुष्पं ससैन्धवम् ।
लोहिताक्षस्य चूर्णेन भावयेत् तं कषायजे ॥ १२ ॥

भावितं प्रतिवापेन शोधयेद् बहुशस्तथा ।
कर्णिकारस्य पुष्पाणां रसे चापि निषेचयेत् ॥ १३ ॥

एतद्धि रञ्जनं श्रेष्ठं ताम्रं क्षेत्रीकृतं भवेत् ।
शोधिते रञ्जिते ताम्रे कर्म कुर्याद् विचक्षणः ॥ १४ ॥

इति महोदधौ रसोपनिषदि ओषधिबन्धनं नाम
नवमोऽध्यायः ॥

---

१. 'ना', २. 'ति' क. पाठः. ३. 'रारेण सा' ख. पाठः. ४. 'धसमं द्रया', ५. 'सन्धिग', ६. 'धिरसब' क. पाठः.

## अथ दशमोऽध्यायः ।

नागसङ्क्रमणं दिव्यं लघुना रसरञ्जनम् ।[१]
निर्वहेद्धेमवर्णं तु तप्तमूपासहे रसे ॥ १ ॥
उष्ट्रिकाग्रीवसदृशं यन्त्रं निर्वाहितं विदुः ।
मन्दोच्छ्वासं त्रिसुषिरं कूर्पतुल्ये विलापयेत् ॥ २ ॥
पूर्वमोषधिबन्धैस्तु पश्चाल्लोहैः सुरञ्जितम् ।[२]
समबीजं द्रुतं रक्तं वेधकं तारताम्रयोः ॥ ३ ॥
रञ्जितस्य तु नागस्य दशभागं तु दापयेत् ।
बीजचीर्णरसोऽप्येवं[३] ततो निर्वाहयेच्छनैः ॥ ४ ॥
द्रवीभूतं ततो दृष्ट्वा सारयेद् बीजमुत्तमम् ।
सारितं सङ्क्रमयेन्नागं[४] यावत् षड्गुणतां व्रजेत् ॥ ५ ॥
तद्रसे वेधकं बीजं द्रावयेदन्धमूषया ।[५]
तद्रसं लोहसङ्काशं सहस्रांशेन वेधयेत् ॥ ६ ॥
वङ्गमप्येवमेव स्यात् ततः कुष्टिसुरञ्जितम् ।
रञ्जितेनापि तीक्ष्णेन निर्वहेदग्निसन्निधौ ॥ ७ ॥
चतुर्णामपि बीजानां सारितं द्रावितं तथा ।
मयूरग्रीवसदृशं सर्वसत्त्वानुवेधकम् ॥ ८ ॥
ताम्रं तारं तथारं च नागं वङ्गं तथायसम् ।
जाम्बूनदसमं कुर्यात् सुराणां मकुटोपमम् ॥ ९ ॥
नागसङ्क्रमनिर्मुक्तं समहेम द्रवीकृतम् ।
पलमेकं प्रयुञ्जानो द्वि[६]ष्टवर्षशतं + + ॥ १० ॥
जीवेत् स बलवानिन्द्रस्तेजसा कान्तिमान् भवेत् ।
चतुर्थभागं हेमस्य व्योषकर्पूरसंयुतम् ॥ ११ ॥
क्रामणं चारणं कृत्वा भक्षयेन्मधुसर्पिषा ।
रसकल्पक्रमेणैव मधु वृद्ध्या प्रयोजयेत् ॥ १२ ॥

---

१. 'कं', २. 'ज' क. पाठः. ३. 'चू' ख. पाठः. ४. 'मं नागं', ५. 'दापये' क. पाठः. ६. (द्वि ? द्य)ष्टवर्षाकृतिर्भवेत् ।' ख. पाठः.

शतं सहस्रमेवापि स्त्रीणां सङ्ग्रहतत्परः ।
उपभोगमुपादाय पश्चाद् रसपराशनम् ॥ १२ ॥

इति महोदधौ रसोपनिषदि नागसङ्क्रमणो नाम
दशमोऽध्यायः ॥

---

## अथैकादशोऽध्यायः ।

तारोत्कर्षविधानं तु दरिद्राणां सुखावहम् ।
आहारार्थं क्रियार्थं च मूलोत्पादनमुत्तमम् ॥ १ ॥

यथा रज्यति तारं तु किंशुकाभमसंशयम् ।
उत्कर्षयति तद्धेमं श्वेतं सञ्जातमेव च ॥ २ ॥

तथाहमुपपादिष्ये लोहसङ्क्रमरञ्जनम् ।
यथा युज्यति हेमेन ससमेऽनेकमुग्रिकम् ॥ ३ ॥

कान्यसस्य त्रयो भागास्तथा रसकतुत्थयोः ।
शिलानिहतनागस्य त्रयो भागास्त्रिशृङ्खलाः ॥ ४ ॥

निर्व्यूढमेकतारं तु रक्ततीक्ष्णानुवापितम् ।
तारावशेषितं रक्तं पुनरेव त्रिशृङ्खला ॥ ५ ॥

मृतमारं त्रिभागं तु रक्ततीक्ष्णत्रिभागिकम् ।
नागं तु निहतं तद्वत् ततो निर्वाहयेच्छनैः ॥ ६ ॥

अक्षरीरितभागास्तु तीक्ष्णभागास्त्रयस्तथा ।
नागस्यापि चतुर्भागास्त्रिभिर्निर्वाहयेत् पुनः ॥ ७ ॥

तारावशेषं निर्धान्तं तूपरि प्रतिवापितम् ।
तीक्ष्णेनामलरक्तेन वापितं वापितं पुनः ॥ ८ ॥

एतद् रक्तं भवेत् तारमिन्द्रगोपकसन्निभम् ।
कलङ्कश्वेतकनके गुञ्जां विध्यात् सुकाञ्चनम् ॥ ९ ॥

ससमं जातहेमे तु भागमेकं प्रवापितम् ।
उत्कर्षयति तत् स्थित्वा ह्यूर्ध्वं वर्णान्तरत्रयम् ॥ १० ॥

---

१. 'त्रि', २. 'ति' क. पाठः. ३. 'भा' ख. पाठः. ४. 'क्तं', ५. 'र' क. पाठः. ६. 'गां' ख. पाठः. ७. 'ञ्जे', ८. 'व्यू' क. पाठः.

त्रिभागलवणं कूर्पं तमोघ्नमिति कीर्तितम्।
बीजानामलिकानां च कृष्टिनां च रसस्य तु ॥ ११ ॥

दाशनं पाशनं चैव शोधनो मार्दवस्तथा।
बोधनो रञ्जनश्चेति कूर्पं षड्विधमुच्यते ॥ १२ ॥

पीतपुष्पतरुक्षारं सामुद्रेण कटुत्रिकम्।
घृतेन गुलसंयुक्तं कूर्पं प्राप्यैष दाशनः ॥ १३ ॥

सक्षीराणां तथा क्षारं सैन्धवं किट्टयोजितम्।
गुलेन सन्नियोज्यं तु कूर्पं प्राप्यैष पाशनः ॥ १४ ॥

शङ्खशृङ्गं तथा शुक्तिः सामुद्रं कटशर्करा।
निर्गुण्डि[1]रससंयुक्तं कूर्पं प्राप्यैष शोधनः ॥ १५ ॥

विष्ठावर्गस्य भागैकं कुङ्कुमं द्विगुणीकृतम्।
कुलसैन्धवतैलेन कूर्पं प्राप्यैष मार्दवम् ॥ १६ ॥

विषं चोपविषं चैव शुक्त्याम्लै(शु ? स्तु) सुभावितम्।
लवणैः कीटवर्गैश्च कूर्पं प्राप्यैष शोधनः ॥ १७ ॥

रक्तपुष्पतरुक्षारं यथालाभं वटस्य च।
भावितो रक्तपुष्पैश्च कूर्पं प्राप्यैष रञ्जनः ॥ १८ ॥

तुत्थालेपे प्रतीवापे लोहानां योजनाविधौ।
वर्णोत्कर्षणलाभार्थं स्नेहार्थं च प्रयोजयेत् ॥ १९ ॥

भिद्यमाने च रूक्षे च मले वर्णविपर्यये।
बीजसं(यु ? शु)द्धये योज्यं कूर्पः सर्वं गुणावहम् ॥ २० ॥

पारतं बस्तमूत्रे तु कृष्णकाचं च लाक्षया।
बस्तपित्तेन सौराष्ट्रं विषाद्यं रुधिरेण च ॥ २१ ॥

गैरिकासुनिषण्णाम्लैः कृष्णमूत्रेण सैन्धवम्।
आम्लवेतसभागेन सुपिष्टं सर्वमेकतः ॥ २२ ॥

स्वेदयेद् गजमूत्रेण मातुलुङ्गफलोदकैः।
स्वेदितं मासमात्रं तु त्रिसङ्घातेन चोद्धृतम् ॥ २३ ॥

---

१. 'ण्डी' क. पाठः.

भावितं तत् फलाम्लेन बोधनं हेमकर्मणि ।
नियोज्यान्दलिकं योगे विद्धं स्याट्टङ्कणायुतम् ॥ २४ ॥

इति महोदधौ रसोपनिषदि तारोत्कर्षविधानो नाम
एकादशोऽध्यायः ॥

---

## अथ द्वादशोऽध्यायः ।

शुल्बारकालिकाच्छेदं प्रवक्ष्याम्यथ रञ्जनम् ।
यथा युज्यति हेम्ना तारेण गतकल्मषम् ॥ १ ॥

कांस्यपात्रं[1] सुराक्लिन्नं तिलतैलेन लेपयेत् ।
दहेत् तं गोमयेनाग्नौ चूर्णीकृत्य +संहरेत् ॥ २ ॥

मृताभ्रचूर्णं सगुलं कोलस्थं सर्षपं वचा ।
टङ्कणारुष्करं चूर्णं रक्ततीक्ष्णं समांशिकम् ॥ ३ ॥

शिखिदन्तीत्रिवृतया भावयीत पुनः पुनः ।
पञ्चाञ्जनविदार्या च पिण्डी बद्धस्तु पातयेत् ॥ ४ ॥

पातितं तं विदार्यां तु निषिञ्चेत् कूर्पवापितम् ।
(र)सार्धं बाष्पिकाक्षारं दधिमस्तु रसेन तु ॥ ५ ॥

गालयेत् तत् फलाम्लेन शनैर्मृद्वग्निना पचेत् ।
तत् ताम्रपत्रमालिप्य खादिराङ्गारतापितम् ॥ ६ ॥

तप्तमामलकीक्षारे कपिलामूत्रनलिते ।
एकविंशतिवाराणि ताप्य ताप्य क्षिपेज्जले ॥ ७ ॥

पुनः प्रका(र? श)मूषायां द्रावयित्वावपेदिमान् ।
मेषशृङ्गं च कूर्पं च केशभस्म ससैन्धवम् ॥ ८ ॥

पालाशपुष्पस्वरसे पेषितं पाचयेत् त्रिधा ।
हठजे क्षुद्रका ब्रह्मी लक्तकाङ्कोलमूलजैः ॥ ९ ॥

निर्गुण्डी मेध्यनन्तायां निषिञ्चेच्छुद्धिमिच्छता ।
तत् ताम्रं चूर्णयित्वा तु रसेन सह चारयेत् ॥ १० ॥

---

1. 'कंसपा' क. पाठः.

पलाशपुष्पस्वरसे त्रिरात्रं तु पुनः पुनः ।
काञ्जिकेन सुखोष्णेन प्रक्षाल्य गतकालिकम् ॥ ११ ॥
पद्मस्य पत्रस्वरसे हटक्षारे सगुञ्जके ।
कौलस्थे स्वेदयेद् रात्रौ पातयेत् पातनाविधौ ॥ १२ ॥
पातितं ताम्रमुद्धृत्य पारतेन सटङ्कणम् ।
उज्जीवयेद् गुलेनैव मधूच्छिष्टेन चान्यथा ॥ १३ ॥
पुनश्च चारितं सूतमेवमेव कृतं पुनः ।
त्रिपञ्चसप्तवारान् वा तथा भक्षीत मोक्षितम् ॥ १४ ॥
उष्णीविये तथा भूयः पारतादिसमन्वितम् ।
पत्रायित्वा ततः पश्चाल्लेपयेदौषधैरिमैः ॥ १५ ॥
भल्लातकानां त्रिंशत्तु द्विधा छित्वा समावपेत् ।
पलाशासनसारेण पाचयेत् पादशेषितम् ॥ १६ ॥
त्रिफला दधि गुलं चैव द्वौ द्वौ प्रस्थौ प्रदापयेत् ।
षट्प्रस्थे हयमूत्रे तु पाचयेत् पादशेषितम् ॥ १७ ॥
हेमाभ्रं दरदं कान्तं रक्तसैन्धवसूतकम् ।
विषपर्ण्याः समूलायाः स्वरसेन तु चारयेत् ॥ १८ ॥
स्तनक्षीरसुपिष्टं तु फलाम्लैः पत्रलेपनम् ।
मूकमूषीकृतं धान्तं द्रुतं भस्त्रानलेन तु ॥ १९ ॥
पुनः प्रकाशमूषायां तस्मिन् तैले निषेचयेत् ।
एवं त्रिपञ्चदशभिर्भवेद् विद्युत्समप्रभम् ॥ २० ॥
त्रिंशल्लेपनिषेकैस्तु शक्रचापसमाकृतिः ।
तापशुद्धं भवेदेतत् सिद्धिकर्मकरं शुभम् ॥ २१ ॥
कोशातकीकुसुम्भानां करञ्जैरण्डसर्षपैः ।
ज्योतिष्मतीपलाशानां तैले चैतन्निषेचयेत् ॥ २२ ॥
सर्वकर्मसु योग्यं स्यात् सुरक्तं हेम तत्समम् ।
रक्तशुल्बस्य भागौ द्वौ भागो हेमवरस्य तु ॥ २३ ॥
संयुक्तं कनकं भाति खदिराङ्गारसप्रभम् ।
ताम्रं भागं च हेमं च समं संयोजयेद् बुधः ॥ २४ ॥

---

१. 'पालाश' ख. पाठः.

मातृकोत्तरमित्याहुरनुरक्तं महर्षिभिः ।
तत् ताम्रस्य त्रयो भागाः द्विभागं हेमभागिकम् ॥ २५ ॥

हेमषष्ठं क्रिया ह्येषा महोदधिमतोद्धृता ।
गुञ्जाफला नागवल्ली श्लेष्मातक्यथ वन्दकी ॥ २६ ॥

आम्रकारकगोजिह्वा विदारी पीलुपत्रिका ।
रक्तचित्रा समदना पलाशं कुग्वकी तथा ॥ २७ ॥

एतत् सर्वं त्रिरात्रं तु तक्रेणाम्लेन वासयेत् ।
ताम्रं पत्रीकृतं तस्मिन् ताप्य ताप्य क्षिपेदपि ॥ २८ ॥

एकविंशतिवाराणि कुट्टयित्वा पुनः पुनः ।
विष्ठावर्गं यथालाभं कल्कं कृत्वा सुलेपितम् ॥ २९ ॥

तत्ताम्रं पुटपाकेन पाचयेदेकविंशति(म्) ।
ततो द्रवीकृतं धान्तं सुरायां तु निषेचयेत् ॥ ३० ॥

ज्योतिष्मत्यां करञ्जे वा तैले चैतन्निषेचयेत् ।
तद् भवेत् काञ्चनाभासं सुरक्तं गतका(लि)कम् ॥ ३१ ॥

सर्वकर्मक्रियायोग्यमक्षयं दोषवर्जितम् ।
त्रिचन्द्रभागद्वयं ह्येतदर्धार्धेन तु मात्रकम् ॥ ३२ ॥

त्रिहेमे पञ्चतारं च विषमं वर्णहीनकम् ।
गोवालं कमलक्वाथे सिञ्चेन्मूत्रेण वै गवाम् ॥ ३३ ॥

पालाशारुष्करैरण्डबीजैः कङ्कुष्ठमूर्धजैः ।
प्रतिवाप्य शतं वारं निषिञ्चेद्धेमकर्मणि ॥ ३४ ॥

तृतीयं मेलितं तं तु कुर्याच्चास्याग्रपर्णिकम् ।
नवमेन तु तारेण हेमं नयति शोभनम् ॥ ३५ ॥

दशांशहेमनिर्भ्रान्तं कनकं व्यावहारिकम् ।
हरिमाक्षिकलोहेन शिलया टङ्कणेन च ॥ ३६ ॥

षड्गुणं निहतं वङ्गं पुटपाकान्धमूषितम् ।
एषामेव तु चूर्णेन मध्वाज्येन विबोधितम् ॥ ३७ ॥

---

१. 'क' ख. पाठः. २. 'च्चा' क. पाठः.

बोधितं बोधितं चाम्ले सुपिष्टं नष्टविग्रहम् ।
पाचयेत् कन्यसे मुख्ये तृतीयेन तु बुद्धिमान् ॥ ३८ ॥
ततः सञ्जायते शुल्बं कूश्माण्डीपुष्पसन्निभम् ।
गुञ्जाफलानि गोमूत्रे स्थापयेद् दिवसत्रयम् ॥ ३९ ॥
ततो रक्तविहीनानि पाचयेन्महिषीदुहे ।
ततः संशोधितं श्लक्ष्णं तापयेत् तत्पयोऽधिकम् ॥ ४० ॥
एवं संशोध्य बहुशः पाचितं कल्कमुत्तमम् ।
त्रिसीसाधिगते ताम्रे कल्कं पाच्य पुनः पुनः ॥ ४१ ॥
निषिञ्चेदार्द्रकरसे शतवारं नवे नवे ।
एवं संशोधितं ताम्रं हेमतारे नियोजयेत् ॥ ४२ ॥
उत्कर्षापाण्डरे हेमे युक्तं वर्णान्तरद्वयम् ।
सर्वाण्यपि च धातूनि सर्वैर्मांसैः सुरासवैः ॥ ४३ ॥
सर्वाम्लैः सविषैः क्षारैः स्नेहमूत्रपयोयुतैः ।
लवणांश्च यथालाभं शनैर्मृद्वग्निना पचेत् ॥ ४४ ॥
तरूणां रक्तपीतानां गुल्मानां रक्तपुष्पजम् ।
रसं दत्त्वा तैव[2] पचेत् पित्तविष्ठांश्च निक्षिपेत् ॥ ४५ ॥
हिङ्गुत्रिकटुकं चैव सर्वोपविषबीजकम् ।
शिलाजतुं लक्तशुनं कङ्कुष्ठं[3] च क्षिपेद् बुधः ॥ ४६ ॥
एवं विपाचितं स्थाप्य ताम्रं पत्रीकृतं शुभम् ।
सन्दंशेन गृहीत्वाग्नौ तस्मिन् धुर्धूरि कारयेत् ॥ ४७ ॥
ताडयित्वा पुनश्चापि यावच्छकलतां व्रजेत् ।
पिण्डीबन्धं ततः कृत्वा लोहकल्केन पातयेत् ॥ ४८ ॥
पातितं ताम्रमुद्धृत्य बालार्कसदृशप्रभम् ।
दशांशं हेमसंयुक्तं गुञ्जावर्णसमप्रभम् ॥ ४९ ॥
विक्रयार्थं तु रजतं मात्रां विज्ञाय दापयेत्[1] ।
आरं चूर्णीकृतं श्लक्ष्णं ++++++++ ॥ ५० ॥

---

१. 'वापये', २. 'तु', ३. 'ष्ठा' क. पाठः.

पक्षच्छेदकरैः सर्वैर्मूलीभिः पञ्चजातिभिः ।
बद्ध्वा वस्त्रेण रात्रौ तु कोलस्थे स्वेदयेद् भृशम् ॥ ५१ ॥
एवं मासगतं खिन्नं स्मरापररसया (?) ।
चारितं चानपं शोध्यं मूत्रैः प्रक्षालयेद् पुनः ॥ ५२ ॥
एवं संशोधितं पिण्डं स्थापयेज्जलनाडिके ।
सुरजिह्वा विषं विष्ठा महातैलं यथार्त्तपम् ॥ ५३ ॥
तत्पिण्डसहितं पिष्टं पक्षमात्रगतं स्थितम् ।
आपात्यान्धगतं भूयः पारतामलटङ्कणैः ॥ ५४ ॥
लेपयित्वा प्रयत्नेन द्रुतं शीते निवापयेत् ।
विंशांशं द्वादशांशं वा दत्त्वा हेममथान्धुषम् ॥ ५५ ॥
वृद्धयेऽपि क्रमं कुर्या(द् ?) दारशोधनमुत्तमम् ।
आरं चूर्णीकृतं श्लक्ष्णं यवपिष्टमजा(धृ ? घृ)ते ॥ ५६ ॥
पयसोत्कारिकां कुर्यात् प्राशयेत् प्रातरुत्थितः ।
गुलेन रजनीचूर्णं प्राशितं जीर्णितं पुनः ॥ ५७ ॥
या(व)द् भवेत् क्षीरवर्णं पुरीषं त(न्तु ? त्तु) संहरेत् ।
तद् गृहीत्वान्धितं सान्तं पक्षच्छेदकृतं भवेत् ॥ ५८ ॥
दशांशेनाष्टमांशेन युक्तं कल्याणमुत्तमम् ।
श्यामाकतण्डुलैः सार्धमारं पिष्ट्वा महाघृते ॥ ५९ ॥
पयसा पाचयेत् पात्रे पक्षं (प्रा ? स्था)प्य च पञ्जरे ।
कृष्णमार्जारसम्भुक्तं (स ? सु)जीर्णं मलमुद्धरेत् ॥ ६० ॥
त्रिरात्रं सप्तरात्रं वा यावदिच्छन्ति तावता ।
अन्धितं ध्मापयेदग्नौ निर्मलं पक्षघातनम् ॥ ६१ ॥
हेमैकयुक्तं दशके कुर्यादाभरणानि च ।
प्रपुन्नागस्य मूलानि पिष्ट्वा गोमूत्रसंप्लुतम् ॥ ६२ ॥
महावृक्षत्वचोन्मिश्रमश्वमारस्य पञ्चकम् ।
स्त्रीमूत्रं पाचितं भूयो यावद् बहलतां व्रजेत् ॥ ६३ ॥

---

१. 'ध्य' ख. पाठः.

शिरःकपालपाज्र्यास्थिकुलीराद्रस्य[1] मारिकम् ।
कापित्थनिम्बनिर्यासकाकमाचीरसप्लुतम् ॥ ११ ॥
महाखुमांससहितमन्धमूषीकृतं द्रुतम् ।
वज्राभ्रं नाममैकन्तु[2] रसराजेन चारयेत् ॥ १२ ॥
अष्टांशेन रसस्योक्तं यावत् षड्गुणजीर्णताम् ।
पूर्वं कुरवकाद्यायां सुरायां बहु पातिते ॥ १३ ॥
सप्तमूषासहे चैवं वज्राभ्ररसचारणम् ।
विषालुविषमुस्तायां रसं निक्षिप्य चोपरि ॥ १४ ॥
तेनैवाच्छाद्य तत्कल्कं बाह्यतः सम्प्रलेपयेत् ।
ततो वस्त्रेण सम्प्रोष्य बन्धितं सूत्ररज्जुना ॥ १५ ॥
स्थापितं पार्थिवे तुल्ये लिप्त्वा चाप्यन्धमूषितम् ।
दहेत् तं गोमयेनाग्नौ यदा तन्मूषतापितम् ॥ १६ ॥
शीतीभूतं तदुद्धृत्य निश्व(ते?)येच्छैलभाजने ।
जीर्णोदरं तदा दत्त्वा तद्भागेनैव चारयेत् ॥ १७ ॥
एवमेव प्रजीर्येत यावत् षड्गुणतां व्रजेत् ।
एवं वज्राभ्रसञ्जीर्णं वङ्गहाटकसुद्रुतम् ॥ १८ ॥
सारितं तत्समांशेन वेधयेत् तारताम्रयोः ।
वज्राभ्रकसमं हेमं कपिलाघृतवापितम् ॥ १९ ॥
कूर्पतुल्यविशुद्धं तु वङ्गहाटकमुत्तमम् ।
वज्राभ्रहेमसहितं विमलं चान्धं[3]मूषितम् ॥ २० ॥
निर्वाहितं कूर्पतुल्ये भवेन्मरतकप्रभम् ।
एवं त्रिपञ्चदशभिः शतेनाक्रान्तनिर्मलम् ॥ २१ ॥
बीजसंयोगतः कुर्याद् बन्धसंक्रमरञ्जनम् ।
एष एव क्रमेणैव मध्यमे तु नियोजयेत् ॥ २२ ॥
मृताभ्रचूर्णं लव(णं) पारतं नरपुद्गलम् ।
क्रमशस्तैलभाण्डे तु स्थापयेदुत्तरोत्तरम् ॥ २३ ॥
मूत्रस्थाने तुपन्यासं भूमौ संस्थापयेद् बुधः ।
तत् समुद्धृत्य षण्मासात् पूजां कृत्वा समारभेत् ॥ २४ ॥

---

१. 'पोपा', २. 'द्र', ३. 'त्र' ख. पाठः

वङ्गमावृत्य संशुद्धं वपेद् भागं (ग ? श)तांशके ।
तस्मिन् निषेचयेद् वङ्गं विंशांशे तारयोजितम् ॥ २५ ॥
नवदोषविनिर्मुक्तं तापशुद्धं सुपाण्डरम् ।
सहस्रपोषकं सम्यग् धर्मार्थं सम्प्रदर्शितम् ॥ २६ ॥
अभ्रचूर्णस्य प(ञ्चाश)त् सूतकं दशकं भवेत् ।
विषं च तत्समं दद्याच्छिशुपुल्लालसम्भवम् ॥ २७ ॥
लवणं च शतं योज्यं षण्मासं स्थापितं भुवि ।
एतन्महाविडं नाम वङ्गदोषविनाशनम् ॥ २८ ॥
वङ्गमावर्त्य शतकं निर्वहेद्[1] विडमेकतः ।
कुर्याच्छशिनिभाकारं वङ्गतारं न संशयः ॥ २९ ॥

इति महोदधौ रसमहोपनिषदि वङ्गस्तम्भशोधनं[2] नाम
त्रयोदशोऽध्यायः ॥

---

## अथ चतुर्दशोऽध्यायः ।

धातूनामेव सर्वेषां लवणानां रसस्य च ।
शोधनं भावनवि(धिं शो ? धिमु)च्यमानं शृणूत्तमम् ॥ १ ॥
सर्वोपविषवर्गाणां स्थावराणां विशेषतः ।
रक्तपीतसुपुष्पाणां मूत्रैः सर्वाम्लसंयुतैः ॥ २ ॥
पाचयेत् सप्तरात्रं तु बद्ध्वा वस्त्रेण डोलया ।
क्षीरैश्चरुशिरोन्मिश्रैर्धान्यैस्तुषविमिश्रितैः ॥ ३ ॥
एवं संस्वेदितं भूयो गोमांसेन तु वेष्टयेत् ।
वेष्टितं चीरया[3] बद्ध्वा मृदा लिप्तं सुशोषितम् ॥ ४ ॥
दहेत् तं गोमयेनाग्नौ क्लिन्नं मांसं यदा भवेत् ।
तदापनीय संशुद्धं भावयेत् पक्षघातनैः ॥ ५ ॥
तालं कर्णिकपुष्पेण किंशुकेन मनश्शिलाम् ।
वसुपि(तौ ? त्ते) सुराष्ट्रं तु झषपित्तेन रोचनाम् ॥ ६ ॥
सस्यकं शिखिपित्तेन रसकं क्षुद्रकारसैः ।
कौसुम्भे गैरिकं सम्यक् कोशातक्यां तु पारतम् ॥ ७ ॥

---

१ 'निश्रमेद्' ख. पाठः. २. 'नो', ३. 'चि' क. पाठः.

निर्वपेच्छुद्धतारेण तत्तारं तारवेधितम् ।
पञ्चांशे वा चतुर्थांशे तारेण समतां व्रजेत् ॥ ७६ ॥
कुर्यात् भोजनपात्राणि सर्वकर्मकरं शुभम् ॥ ७७ ॥

इति रसोपनिषदि महोदधौ शुल्वकालिकाच्छेदो नाम
द्वादशोऽध्यायः ॥

---

## अथ त्रयोदशोऽध्यायः ।

भल्लातकानि त्रिंशच्च द्विधा छिन्नानि कारयेत् ।
पलाशास्तनयोश्चैव त्वचं भल्लातकैः समम् ॥ १ ॥
एतैरष्टगुणं तोयं पाचयेत् पादशेषितम् ।
त्रिफला दधिगुणं चैव द्वौ द्वौ प्रस्थौ प्रदापयेत् ॥ २ ॥
षट्प्रस्थं हयमूत्रं च पाचयेत् पादशेषितम् ।
पाचितौ द्वौ कषा(ये ? यौ) तु द्रोणार्धेन तु पाचयेत् ॥ ३ ॥
कोशातकिकुसुम्भानां करञ्जैरण्डसार्षपैः ।
ज्योतिष्मत्याः पलाशानां तैलेनानेन पाचयेत् ॥ ४ ॥
कषायैर्नवनागेन पाचयेत् तैलशेषितम् ।
इ+तरज्जुना तैलं + + + + + + + + ॥ ५ ॥
सर्वेषामेव लोहानां बलवान् वङ्ग उच्यते ।
तस्य संशोधनं द्रव्यं स्तम्भनं च रसस्य तु ॥ ६ ॥
संक्षेपात् सर्वशास्त्राणामतिदूरं सुदुष्करम् ।
तथाहमवतार्यैतान् गुरौ दृष्टमहर्निशम् ॥ ७ ॥
कुटचार्कमिठक्षारे[1] निर्गुण्डीब्रह्मवृक्षयोः ।
गन्धगोक्षुरके ब्रह्मचानन्तायां + निषेचयेत् ॥ ८ ॥
सञ्चूर्ण्य सर्वाण्यस्थीनि विषबीजसमानि च ।
प्रतिवाप्य बहून् वारान् तिलतैले निषेचयेत् ॥ ९ ॥
एवं शुद्धं भवेद् वङ्गं शङ्खक्षीरेन्दुसन्निभम् ।
मृताभ्रचूर्णं वङ्गं च समं टङ्कण[2]भागिकम् ॥ १० ॥

---

१. 'कैंविठ' क. पाठः. २. 'ङ्कण' ख. पाठः.

बीजाष्टमेन संविद्धमर्धांशेन तु मातृकम् ।
शोधितं सूतकरसं पादचीर्णं सहेमकम् ॥ ३४ ॥

गन्धकं त्रुटिमात्रेण चारयेत् पञ्चकीटजम् ।
पञ्चाङ्गुलिसमूलं तु सवङ्गापीतरोचके ॥ ३५ ॥

चारितं सूतकं गन्धं दिवसं दिवसं प्रति ।
संस्वेदयेत् तु मधुना तुषाग्नौ मृदुनोष्मणा ॥ ३६ ॥

आयसे भाजने पक्वं पक्षं वा मासमेव वा ।
देविशानिम्बमूलेन दन्तक्षुण्णमुखाम्बुना ॥ ३७ ॥

मर्दितं लेपयेत् तारं यावद् भ्रमरसन्निभम् ।
तावद् दिनकरैस्तप्तं शुष्कबीजेन वेधितम् ॥ ३८ ॥

पञ्चमांशेन हेमेन युक्तं कल्याणकं भवेत् ।
तिलकस्वरसे सूतं हरितालं त्रिभागकम् ॥ ३९ ॥

चारितं हेमसङ्कीर्णं वज्रकन्दस्य मूषया ।
बन्धितं सुनिगुप्तं तु तुषाग्नौ गोमयेऽपि वा ॥ ४० ॥

पाचितं सप्तरात्रं तु पलाशस्नेहसंप्लुतम् ।
भावितं तारपत्रं तु लिप्तं वोप्तं त्रिवारतः ॥ ४१ ॥

तृतीयं मेलितं हेमं भवेत् कल्याणकं भृशम् ।
शोधितं रक्तमुख्यैस्तु सामुद्रैः केतकीफलैः ॥ ४२ ॥

अन्येनापि विधानेन कृतं शुल्बसमं नयेत् ।
रसमभ्रकसङ्कीर्णं ताम्रपत्राणि लेपयेत् ॥ ४३ ॥

कदम्बिन्या रसेनापि त्रिशूलीचन्दनारसे ।
स्थापितं तु त्रिरात्रं तु तत्कल्केनान्धमूषितम् ॥ ४४ ॥

द्रावितं तारभागेन पञ्चमेनाष्टमेन वा ।
योजयेद् भूकदम्बिन्या शूलिन्या स्वरसे क्षिपेत् ॥ ४५ ॥

तच्छुद्धं पत्रयित्वा तु तप्तं धुर्धूरि कारयेत् ।
विषघ्नीस्वरसेनैव यावन्निर्मलतां व्रजेत् ॥ ४६ ॥

---

१. 'ल्बं' क. पाठः.

तत्तारसदृशं वर्णं निघर्षेत् कनकोपमम् ।
एतद्गर्भं यथोद्दिष्टं रसस्य बलवर्धकम् ॥ ४७ ॥
विज्ञाय मतिमान् मात्रं हेमभागं प्रदापयेत् ॥ ४७½ ॥

इति महोदधौ रसोपनिषदि औषधविधिर्नाम
चतुर्दशोऽध्यायः ॥

---

## अथ पञ्चदशोऽध्यायः ।

पतङ्गीसूतकरसो विहितो लोकपूजितः ।
तस्य तद्बन्धनविधौ रञ्जनं च सुदुष्करम् ॥ १ ॥

तस्मादभ्रं सुसंद्राव्य लोहं संद्राव्य चैकतः ।
सूतकेनोपयुञ्जानः क्षिप्रं सिद्धिमवाप्नुयात् ॥ २ ॥

ध्रुवो हि द्रावणासिद्धिर्बीजबन्धस्तथौषधिः ।
निक्षेपश्चतुरो बन्धास्ताम्रबन्धस्तु चारणे ॥ ३ ॥

तस्माच्चूर्णं द्रावयीत विधास्ये विस्मयं नृणाम् ।
सूतकप्रमितिमन्त्री[1] तं नानावर्णमलेपकम् ॥ ४ ॥

एकपत्रीकृतं व्योमं स्थापितं स्नुहिजे रसे ।
व्योषसैन्धवहिङ्गूनां चूर्णं दत्त्वाथ मात्रया ॥ ५ ॥

पञ्चाङ्गुलिसमूलं तु दग्ध्वा भस्म चतुर्गुणम् ।
काञ्चिके गालयित्वा तु व्योमं निक्षिप्य लोलयेत् ॥ ६ ॥

गोशृङ्गे सन्निधातव्यं राशौ गोमयसञ्चये ।
सप्ताहाद् द्रवते क्षिप्रं पद्मपत्रे जलं[2] यथा ॥ ७ ॥

मृतमभ्रं द्रवन्त्यास्तु नन्द्यावर्ते ह्यगस्तिजे ।
गन्धकाकल्कलिप्तायां मूषायां निक्षिपेद् बुधः ॥ ८ ॥

तेनैवान्धीकृतं सम्यङ् मृन्मये भाजने न्यसेत् ।
पुनः प्रच्छादितं छिद्रं लाक्षया वेष्टितं दृढम् ॥ ९ ॥

---

१. 'न्द्रा', २. 'ण्ड' क. पाठः.

कासीसं कदलीतोये गन्धकं कुर्कटाजले ।
माक्षिकं निक्ति(का)यां तु विमलं चेक्षुके रसे ॥ ८ ॥
शैलं च गौतमक्षीरे सैन्धवं शतपर्वणि ।
अञ्जनं स्नुहितोयेन टङ्कणं ब्रह्मवृक्षजे ॥ ९ ॥
एवं सम्भावितान् सर्वान् सर्वकर्मणि योजयेत् ।
रञ्जनं प्रतिबध्नन्ति सङ्क्रमेण च कालिकम् ॥ १० ॥
स्थलोद्भवहठक्षारमम्लवेतससंयुतम् ।
लवणेन च संयुक्तमार्तवं च वरस्त्रिया ॥ ११ ॥
काकविष्ठान्वितं चैव मर्दयेत पुनः पुनः ।
पक्षच्छेदं प्रशंसन्ति भावितं मर्दितं बहु ॥ १२ ॥
प्रस्यन्दीनां पतङ्गीनां धातूनां च विशेषतः ।
अग्निजारूरसेनैव भावयेच्छतशो भृशम् ॥ १३ ॥
पक्षच्छेदकरं दिव्यं द्रावणं च विशेषतः ।
सूतके सर्वधातूनां भावितानां निजारुणा ॥ १४ ॥
पिष्ट्वाम्लैः कल्कमालिप्य तारपत्रं प्रलेपयेत् ।
कृष्णीभूतं तु हेमेन सार्धमर्धेन मातृकम् ॥ १५ ॥
एकैकं सङ्करं वापि कुर्वन् सिद्धिमवाप्नुयात् ।
यवचर्चिरसेनापि भावयेत् सर्वधातवः ॥ १६ ॥
भावितं तु रसोन्मिश्रं मारितं चारणाविधौ ।
लेपनाद् वापनाद् वापि तारं संशुद्धलक्षणम् ॥ १७ ॥
हेमं यथेष्टं संयोज्य कर्म कुर्याद् विचक्षणः ।
सर्वान् रसवरान् शुद्धांस्त्रीमूत्रे भावितान् बहून् ॥ १८ ॥
हेमचीर्णरसेन्द्रेण मर्दयीत महाघृते ।
स्थापयेन्नरजङ्घानां पित्तं सम्पूर्य मानवः ॥ १९ ॥
जतुनालिप्य बहुलं मासं गोष्ठे निधापयेत् ।
उद्धृत्य तारपत्रं तु लिप्तमातपशोषितम् ॥ २० ॥

---

१ 'क्षु' ख. पाठः.

युक्तं च ग्रासहेमेन काञ्चनं वरमिष्यते ।
पक्षच्छेदकरं चैव क्रामणं शोधनं तथा ॥ २१ ॥
मानवं रुधिरं मूत्रं स्नेहं पित्तं सुयोजितम् ।

पलाशनिर्गुण्डिककाकमाच्या दलोत्तमाल्याकुरटीरसेन ।
कृत्वोपलं तण्डुलखण्डतुल्यं क्रमेण भाव्यं सुनिषण्णकेन ॥ २२ ॥
ततस्तु तं पङ्कजगर्भगौर्याः सयौवनाद् वर्तितगात्रयष्ट्याः ।
सुहेमकुम्भस्तनयुग्मवत्यास्तस्याः स्तनक्षीरसुखोष्णसिक्तः ॥ २३ ॥
बद्ध्वैकमासं सहस्रार्कपत्रे संस्वेदयेत् क्षारविषाम्लमिश्रैः ।
सुस्विन्नमेतत् प्रतिचूर्णगन्धं तदाज्यमध्वोन्नवनीततैले ॥ २४ ॥
गवां च पित्तेन विमर्द्य भूयः स्वेद्योऽन्धतुत्थास्थितसप्तरात्रम् ।
संयुक्तमेतद् विषसूतकाभ्यां तारप्रलेपात् कनकं करोति ॥ २५ ॥
इदं हितं गन्धकपक्षकृ(न्तनं ? त्तं) न कृत्तपक्षो नच कर्मकारः ।
अनेन मार्गेण तु योजयेत रसस्य सिद्धिं परमभ्युपैति ॥ २६ ॥
हेमग्रस्तो रसेन्द्रो द्रुयमुपलवरं सम्प्रकीर्णं च कुर्वन्
स्वेदस्नेहेन गोजानररुधिरवसामांसपक्षो विषाणे ।
तत्कन्यापत्रलिप्तं त्रिपुटहतसमं क्षेपितं शुद्धतारे
अर्धं चार्धेन युञ्ज्याज्जलधरनिहितं मातृकातैलयोगः ॥ २७ ॥
नरेन्द्रकोशातकपुष्पभाविता मनश्शिला पारतचूर्णसंयुतम् ।
करोति पारं त्रिभिरेव पातयेत्तदर्धहेमं जननीसमानम् ॥ २८ ॥
पिष्ट्वा विषं हिङ्गुलिसूतकैकं शिला(द्यं ? + +) शोकविलात्रिकांशम् ।
लुङ्गाम्बुपिष्टं लुलितं पिशाच्या ताम्बूलसिक्तासितमाशु ताम्रम् ॥

शिंशुमारस्य मूलेन गन्धकं सूतकं समम् ॥ ३० ॥
पिष्टं पत्रप्रलेपेन तारं भ्रमरसन्निभम् ।
तत् तारमष्टमांशेन शुक्लबीजेन वेधितम् ॥ ३१ ॥
अर्धार्धेन समं योज्य गृह्णीयात् काञ्चनं भवेत् ।
बीजचूर्णं रसं गृह्य त्रिगुणीकृतगन्धकम् ॥ ३२ ॥
गोवन्द्रनासमूलं तु दन्तानिष्ठीवितं चरेत् ।
तत्ताम्रपत्रमालिप्य शोषितं चारितं पुनः ॥ ३३ ॥

एकहस्तगतं भूमौ सागरोर्मिजलावहे ।
स्थापितं सप्तरात्रं तु द्रवीभूतं सुनिर्मलम् ॥ १० ॥
हेमं मञ्चार्यं दशमं सूतकं समयोजितम् ।
दन्तोलूखलनिक्षुण्णं कार्पाससुपरिस्रुतम् ॥ ११ ॥
एकीभूतं सुहेमेन द्रुतेन विषपारते ।
मर्दितं लेपयेत् तारं शतांशे हेमबोधितम् ॥ १२ ॥
तद्रसं सारयन्त्यां तु द्रावितं द्रावणाविडे ।
तद् भवेत् काञ्चनं दिव्यं सहस्रमपि वेधयेत् ॥ १३ ॥
यस्य पुष्पस्य वर्णेन वर्णो दृश्यति चाभ्रके ।
तस्य तैलेन संप्लाव्य स्थापयेदग्निसन्निधौ ॥ १४ ॥
मासेन द्रवते चाभ्रं क्षमांसेन विमिश्रितम् ।
तत्समं पारतोन्मिश्रं वध्यते रज्यते क्रमात् ॥ १५ ॥
देवतालीरसप्रस्थैस्त्रिभिरभ्रं च तत्समम् ।
पुन्नागतैलप्रस्थं च पाचयेत् तैलशोषितम् ॥ १६ ॥
पाचितं वस्त्रमालिप्य वर्तिं प्रज्वालयेद् बुधः ।
जले निपातितो दिव्यो रसः सूतकसप्रभः ॥ १७ ॥
तद्रसं छिद्रमूषायां रसेन सह योजयेत् ।
नागेनान्तनिमग्नस्तु मूकमूषागतं धमेत् ॥ १८ ॥
एवमेकगतं वद्धं गोशृङ्गे पयसा पचेत् ।
पक्वं पुनर्द्विधाकृत्य दशांशशिलया पचेत् ॥ १९ ॥
एतत् स्यात् तारदशके विद्धं कल्याणमुत्तमम् ।
वङ्गस्यापि ततो विद्धं दशांशे तारमुत्तमम् ॥ २० ॥
अष्टमभ्रकचूर्णं तु कपालैर्मरिचैः सह ।
शिलानिर्वापितं भूयोऽप्यगस्तीरससंप्लुतम् ॥ २१ ॥
मार्जारपादीस्वरसे + + तत्फलमर्दितम् ।
मातुलुङ्गोदरे न्यस्तं व्रीहिमध्ये निधापयेत् ॥ २२ ॥

---

१. 'न्त्याशु द्रा' क. पाठः.

द्रवते पक्षमात्रेण शिलापारतसैन्धवम् ।
गोशृङ्गे सन्निधातव्यं भूयः सप्त तदुद्धरेत् ॥ २३ ॥
शतांशे ताम्रमूषायां रसमेकं निपातितम् ।
अन्वितं धामयेत् प्राज्ञो ज्योतिष्मत्यां निषेचयेत् ॥ २४ ॥
नागेनापि शतांशेन वेधयेदेवमेव तु ।
वेधितं स्फुटते चैकं फलं दद्यान्मृदूत्तमम् ॥ २५ ॥
मृतस्याभ्रकचूर्णस्य यथाशक्त्या तु संहरेत् ।
शाककिञ्जल्कस्वरसे भावयेद् बहुशस्तथा ॥ २६ ॥
वेणुनाड्यां ततः स्थाप्य तद्रसेन च पूरयेत् ।
कटशर्करया वा + + + पिष्टगुडेन च ॥ २७ ॥
दग्धा च लेपयेत् सन्धिं तथेक्षुरससंप्लुतम् ।
पाचयेदिक्षुशालायां सप्तरात्रं पुनः पुनः ॥ २८ ॥
द्रवते चाभ्रकं दिव्यमलाबुनि च सन्न्यसेत् ।
अलेपको भवेद् दिव्यं पद्मपत्रे जलं यथा ॥ २९ ॥
आयसं चट्टुकं कुर्याद् बहलं चतुरङ्गुलम् ।
तदग्नौ धामयेत् सम्यग् यावत् क्लिन्नं भवेत् ततः ॥ ३० ॥
मृताभ्रचूर्णं सङ्गृह्य जलकुक्कुटविष्ठया ।
निक्षिपेत् चट्टुके शीघ्रं द्रवीभूतं यथा भवेत् ॥ ३१ ॥
श्लेष्मातकफलरसे मर्दयीत पुनःपुनः ।
उष्णद्रावणमेतत्तु क्षिप्रमेवेह सिध्यति ॥ ३२ ॥
तद्रसं निर्मलीभूतं सूतकेन नियोजयेत् ।
हेमं सञ्चार्य शैलस्थं कार्पासस्य परिप्लुतम् ॥ ३३ ॥
एवमेकगतं बद्धं स्थापयेत् तुम्बिनीफले ।
बीजं सन्द्रावितं भूयः शतसाहस्रवेध(कः ? कम्) ॥ ३४ ॥
अभ्रं पुनर्नवरसैः सप्तवारं पुटे पचेत् ।
पुनस्तु चटकाम्लेन पाचयेदेवमेव तु ॥ ३५ ॥
आम्रवेतसमभ्रं च समं टङ्कणपादिकम् ।
चारयित्वा फलाम्ले(ह ? न) स्थापयेच्छैलभाज(येत् ? ने) ॥ ३६ ॥

स्थापितं धान्यमध्ये तु मक्षगात्रेण चोद्धरेत् ।
उद्धृत्य खल्वपाषाणे कान्तजेन तथोपले ॥ ३७ ॥
पुनस्तु तत्फलाम्लेन चारितं दिवसं प्रति ।
द्रवते चाभ्रकं शीताच्छशिवर्णसमद्युति ॥ ३८ ॥
अभ्रचूर्णं च मांसेन पेषयित्वा तु भाजने ।
स्थापयेत् सह षड् बिन्दून् जलं चापि विधानतः ॥ ३९ ॥
मांसं संभक्ष्य दिवसान्मलमुत्सृजेत यथा ।
जीर्णोदरे[1] तु स्रवते रससूतकनत्समम् ॥ ४० ॥
तैलं विडं च तद् वक्ष्ये विविधानभ्रचारिणे ।
जारयेद् द्रावणान् बन्धान् पारदाशनरञ्जनान् ॥ ४१ ॥
सर्वद्रावणतैलेन सर्वोपरसमात्रया ।
पाचितं लेपयेदभ्रं दहेत् तं चाग्निसन्निधौ ॥ ४२ ॥
चारयेत् सूतकरसं क्षिप्रं गृह्णाति चारितः ।
तत्पिण्डं स समादाय चारयेत् षोडशांशिकम् ॥ ४३ ॥
अम्लेन सुनिषण्णस्य कान्ता देवी कृताञ्जलिः ।
सुवन्दाया रसे यामं यामं विश्रामयेत् पुनः ॥ ४४ ॥
विडेन सहितं पश्चात् प्रविशेत्[3] तत्र भूमिकम् ।
संस्वेदितं सुरातोयैर्यामो नान्ये विचारणम् ॥ ४५ ॥
यामहान्या तथैवाह्ना भागस्याभौ[4] तथाष्टमान् ।
अष्टमाष्टममेवोक्तमहोमात्रेण चारयेत् ॥ ४६ ॥
समं षड्गुणमेवापि द्विगुणं त्रिगुणं तथा ।
सहस्रपादिकं गन्धं षोडशांशं प्रदापयेत् ॥ ४७ ॥
एवमाहारवृत्तिः स्याद् बलवान् (दे ? दो)षं निर्गतम् ।
तज्जिष्ठोऽग्निसहोऽक्षीणस्त्वन्यथा तु विपद्यते ॥ ४८ ॥
अप्रमाणं यथाहारमजीर्णं चारुचिर्भवेत् ।
मन्दाग्निना क्षयो मूर्छा मरणं च रसस्य तु ॥ ४९ ॥

---

१. 'रि' क. पाठः. २. 'जिह्वोदर यः स्र' ख. पाठः. ३. 'स्नेह चा', ४. 'भागस्या त', ५. 'द्विः' क. पाठः.

यथा रसस्तथा ह्यात्मा यथा ह्यात्मा तथा रसः ।
आत्मविद् रसविच्चैव द्वाविमौ सूक्ष्मदर्शिनौ ॥ ५० ॥

तस्मादभ्रकमाहारं विडं चाग्निप्रमाणतः ।
कालत्रिकं च यो ज्ञात्वा कुर्यात् स रसवेदकः ॥ ५१ ॥

अजीर्णां वमयेत् क्षिप्रं वमितं तु यथाक्रमम् ।
पूर्वोक्तविधिना कुर्यादाहारस्य विवृद्धये ॥ ५२ ॥

उष्णसौवीरके स्थाप्य तदुष्णं द्रावयेद् विधौ ।
सञ्चार्य वाससा गृह्य रसं निष्पीड्य वामयेत् ॥ ५३ ॥

वान्तशेषं ततः पिण्डमष्टमांशेन चारयेत् ।
षोडशांशेन वा युक्तं चतुर्थांशेन वा पुनः ॥ ५४ ॥

कृष्णत्वं पक्षिकास्नेहो लोहादिषु न सङ्क्रमः ।
वेपथुः स्पर्शसङ्क्रान्तिर्भुक्तमोक्षं सशब्दता ॥ ५५ ॥

एतानष्टौ महादोषान् विज्ञाय सहजानिह ।
यो निहत्य तु गृह्णीयाद् बध्नीयात् सह सूतकः ॥ ५६ ॥

अष्टदोषानभिगतो बीजेन सह सन्द्रुतः ।
वेधयेत् सर्वलोहानि शरीरं च स्वतेजसा ॥ ५७ ॥

पुटसहो लेपसहस्त्वन्धमूषासहस्तथा ।
वापितः सारणसहः प्रतिवाप्य उभे द्रुते ॥ ५८ ॥

समलोहद्रुतः सूतो यदाग्नौ न क्षयं व्रजेत् ।
लोहावर्तः स विज्ञेयः षडवस्था रसस्य तु ॥ ५९ ॥

तस्मादग्निबलं ज्ञात्वा यदवस्थो रसो भवेत् ।
तत्क्रमेण प्रयुञ्जीत विपरीतं न सिध्यति ॥ ६० ॥

पादद्रुतं दशांशेन + + + + समद्रुतम् ।
सहस्रद्विगुणं विध्यात् षड्गुणं स्पर्शमादिशेत् ॥ ६१ ॥

ताम्रं नागायसं वङ्गमभ्रजेन यथाक्रमम् ।
तारहेमविनिष्क्रान्तं शतसाहस्रमादिशेत् ॥ ६२ ॥

---

१. 'निष्पीड्य वा', २. 'चोक्त्वा य' ख. पाठः.

समांशे दशवेधी स्यात् त्र्यंशेन शतमुच्यते ।
दशकान्तं शतं वि(द्या? ध्या)च्छतकान्तं सहस्रकम् ॥ ६३ ॥
सहस्रं स्पर्शवेधी स्यात् कोटिमप्येष विध्यति ।
एष बन्धनबीजानां विधिरु(क्त? क्तो) ह्यशेषतः ॥ ६४ ॥
अभ्रसत्त्वं च हेमं च नागं ताम्रं यथाक्रमम् ।
भागोत्तरविवृद्ध्या तु वापितं तीक्ष्णमाक्षिपेत् ॥ ६५ ॥
निर्वहेद्धेमशेषस्थं पश्चाद् भागोत्तरं भवेत् ।
एवं द्वादशधा कुर्यादभ्रसत्त्वं निवर्तने ॥ ६६ ॥
एवं सुरक्तहेमेन बध्यते रज्यते द्रुतम् ।
बीजसंस्करणादेव रससिद्धिर्विशिष्यते ॥ ६७ ॥
पूर्वं संशोधितः सूतो बीजेन समसद्रुतः ।
विशुद्धं तं शुभं सार्यं विध्यात् तारशतेन तु ॥ ६८ ॥
वेधकस्य तु बीजस्य पुटपाकगतस्य च ।
ताम्रमाक्षिकयुक्तस्य समहेमस्थितस्य च ॥ ६९ ॥
हेमभागं पुनर्दत्त्वा तत्समं ताम्रमाक्षिकम् ।
निर्वापितं पुटोद्दीर्णमेवमेव तु तारयेत् ॥ ७० ॥
दशधा शतधा वापि यथाशक्त्या तु रञ्जितम् ।
द्रवेद् रसबलं ज्ञात्वा ततो लोहेषु वेधयेत् ॥ ७१ ॥
तैलं समुद्रकार्पासं सुबीजं च सवञ्चुलम् ।
पीलुजं दन्तिसहितं तैलं पालाशमेव च ॥ ७२ ॥
अतसीबिम्बिकागुञ्जापञ्चाङ्गुलसमार्दपि ।
आम्लवेतससंयुक्तं सर्वं चारणमिष्यते ॥ ७३ ॥
वाशनं दाशनं चापि सर्वोपरससंयुतम् ।
रञ्जनं च रसेन्द्रस्य रक्तक्षारैः सुपाचितः ॥ ७४ ॥
काकजङ्घामधोपुष्पिमग्निवर्चरसं हरेत् ।
दशभागैकतैलेन पचेत् तैलावशेषितम् ॥ ७५ ॥
विष्ठावर्गं च हिङ्गुं च स्मरजिह्वा सटङ्कणम् ।
तत्तैले निर्वपेत् स्तोकं शिखिचन्द्रकगन्धकम् ॥ ७६ ॥

---

१. 'स्का', २. 'विजांच', ३. 'जां', ४. 'ध', ५. 'र्व्वा', ६. 'ष्ठु' क. पाठः.

विषं चुच्चुन्दरीं तालं तैलकारकमार्षप ।
एवं निर्यातनं तैलं द्रावणं बीजमारणम् ॥ ७७ ॥

ज्योतिष्मतीपलाशानां द्रवन्तीनां अपुन्नजम् ।
जालिनीनां कुसुम्भानामेरण्डङ्कुदयोरपि ॥ ७८ ॥

तैलं सर्वप्रयोगेषु द्रावणं रञ्जनं शुभम् ।
लोहानां शोधनं चापि स्नेहमार्दवकार(काः? कम) ॥ ७९ ॥

गन्धकं हरितालं च काक्षिमाक्षिकटङ्कणम् ।
शिलापारतभागेन समं तैलेन भावयेत् ॥ ८० ॥

तैलभाण्डप्रलिप्तं तु पातयेच्छिद्रभाजने ।
पाचितं तैलमालिप्य घनपत्राणि तापयेत् ॥ ८१ ॥

अग्निवर्णानि दृष्ट्वैव सूतकस्योपरि क्षिपेत् ।
मर्दयेद् यावदेकस्थः सूतकः पिण्डतां व्रजेत् ॥ ८२ ॥

पीलुपत्रिकमूलेन मूलेन शरपुङ्खया ।
चारितं चाभ्रकं सूतं जारयेज्जारणाविडे ॥ ८३ ॥

गन्धर्वहस्तस्वरसे शिग्रुमूलरसेन च ।
सामुद्रं शतशो भाव्य दापयेदधरोत्तरम् ॥ ८४ ॥

समजीर्णो द्विजीर्णो वा यावद् बलमवाप्नुयात् ।
तावत् संस्वेदयेद् रात्रौ सञ्जाते दीपिकासु वा ॥ ८५ ॥

शिग्रुमूलं शिखिशिफा पौनर्नवकरञ्जजे ।
बीजपूररसे मासमायसे चाग्निमध्यतः ॥ ८६ ॥

सूतकं चाभ्रचूर्णं च चारयेज्जीर्णलक्षणम् ।
विज्ञाय षडवस्थां तु षड्दोषपरिवर्जितम् ॥ ८७ ॥

भ्रमो भङ्गस्थितं कम्पजलूकाबन्धशस्तथा ।
काकविष्ठा च पिण्डश्च षडवस्थाभ्रचारणा ॥ ८८ ॥

पार्श्वतः पुच्छतो ग्राही ग्रसितो वेष्टितस्तथा ।
मूर्छको हिंसकश्चैव षड् दोषाश्चाभ्रचारणे ॥ ८९ ॥

---

१. 'र्षा' क. पाठः. २. 'बे' ख. पाठः.

एवं सञ्चारितः सूतो जारयेत् तादृशौषधैः ।
जीर्णावस्थं ततो ज्ञात्वा षड्गुणः परमो विधिः ॥ ९० ॥
कपिलोनुचरं चैव निःशब्दश्चान्यदंशकः ।
अक्षीणोऽग्निसहश्चैवमग्रजीर्णस्य लक्षणम् ॥ ९१ ॥
अरुचिर्मुक्तमोक्षश्च मूर्छा मरणमेव च ।
क्षीणता दुर्बलत्वं च षडेवाजीर्णलक्षणम् ॥ ९२ ॥
नमस्कारी वृश्चिकाली लाङ्गली वनचर्चिका ।
अभ्रकं चारयेत् पिष्टं घनं सूतकसंयुतम् ॥ ९३ ॥
अजगन्धासमं काचं चारयेल्लोहभाजने ।
चीर्णं दृष्ट्वा तु सार्यां च बलवृद्धिर्यथा भवेत् ॥ ९४ ॥
सम्प्रसूतो यथा बालः स्तनक्षीरघृताशनः ।
वर्धते दृष्टसर्वाशी पूर्णयौवनकर्कशः ॥ ९५ ॥
एवं रसवरेन्द्रोऽपि कालान्तरविवर्धितः ।
सर्वान् सम्भक्ष्य बलवान् जी+लोहोदरो भवेत् ॥ ९६ ॥
सप्तैता गतयो न स्युस्तदा बद्धं विनिर्दिशेत् ।
यत्किञ्चिद्विधिना गुप्तं मन्त्रेण भुजगो यथा ॥ ९७ ॥
स मोहति जलं क्षिप्तो धूमस्फोटविसर्पिणः ।
त्रासः सूक्ष्मो विजृम्भश्च पावकान् षड् विनिर्गतः ॥ ९८ ॥
वनंबदर्या मूलं हि दन्तनिष्ठीवनं घनम् ।
रसेन्द्रेण तु सञ्जीर्णो जारयेत् तद्रसोष्मणा ॥ ९९ ॥
कवाटीरक्तचित्रं तु दग्ध्वा दधिजले क्षिपेत् ।
क्षिप्तमेकीकृतं भूयो गालयेदेकविंशतिः ॥ १०० ॥
तत्क्षीरे घनपत्राणि दत्त्वा धुर्धूरि कारयेत् ।
तच्चूर्णं सूतकरसे चारयेदौषधैरिमैः ॥ १०१ ॥
क्षीरिणा सर्पनयना शरपुङ्खविदारिका ।
बल्लिका कारजङ्घा च वृत्तपर्णी सुजालिनी ॥ १०२ ॥
गोधा सहचरा क्रान्ता देवी वन्दारुयो दश ।
सुराजीर्णं जरेत् क्षिप्रं मार्जारास्थिविडेन च ॥ १०३ ॥

१. 'त्त्वा', २. 'त्ता' ख. पाठः.

जारितं पारतसमं बीजं सञ्चार्य च क्रमात् ।
चुञ्चुन्दरीणामस्थ्ना तु चूर्णं दत्त्वा विडेन च ॥ १०४ ॥
पूर्वक्षारेण पक्वं तु द्रावणं तु नियोजयेत् ।
द्रावितं लेपयेत् तारं दशांशे हेमसुत्तमम् ॥ १०५ ॥
अभ्रस्य चारणान् वक्ष्ये स्पर्शेन ग्राहको भवेत् ।
तत्क्षणादेव सम्भक्ष्य सूतकः पिण्डतां व्रजेत् ॥ १०६ ॥
गन्धकं हरितालं च टङ्कणं विमलं विषम् ।
कटुत्रिकं कान्तकासीसहिङ्गुलशुनार्द्रक(म्) ॥ १०७ ॥
पीलुशिग्रुहलानिम्बमगस्तिं च शतावरी ।
काकमाची सकर्कोटत्र(त्रीं ? त्री) पद्मनिचिंत्रकम् ॥ १०८ ॥
मार्जारपादी वर्षाभूः सूर्यावर्तश्च वज्रिणी ।
माक्षिकं त्रिवृताश्चापि त्रिफला चापि वज्रिणी ॥ १०९ ॥
राजकोशातकी कान्ता श्वेता च गिरिकर्णिका ।
बीजपूररसैः पिष्ट्वा घनपत्रं पुटे पचेत् ॥ ११० ॥
स+त्वाज्जीवनाद्यत्तु तद्रसं भावयेद् बहु ।
स्पर्शनादभ्रचूर्णस्य सूतकः पिण्डतां व्रजेत् ॥ १११ ॥
एतेन विधिना सम्यगग्निस्थं चारयेद् रसम् ।
जारयेदविचारेण यावत् षड्गुणतां व्रजेत् ॥ ११२ ॥
अनेन विधिना तीक्ष्णं चारयेज्जारयेत् तथा ।
तीक्ष्णं सम्भाव्य शतशो मातुलुङ्गफलाम्बुना ॥ ११३ ॥
चतुर्णामपि बीजानामेकं द्वौ वा बहूनि वा ।
चारयेद् द्रावयेल्लेपं त्रिसङ्घाते समाहिते ॥ ११४ ॥
षोडशांशेन संयोज्य समसूतकसुद्रुतः ।
विडेन द्रावणाङ्गेन स्थापितं तुम्बिलीफले ॥ ११५ ॥
बीजोत्तरं तथा चार्य जाम्बूनदसमानकम् ।
मर्दयेदातपे तप्तं रामनै+फलाम्बुना ॥ ११६ ॥

---

१. 'त्रितम्' क. पाठः.

द्रुतबीजं रसं दग्ध्वा सूतकं सूर्यसन्निभम् ।
वैडूर्यतेजसङ्काशं पारावतगलद्युतिः ॥ ११७ ॥

संशुद्धं तारकाभ्रेषु शतांशेन तु वेधयेत् ।
एकभागस्तु सरसो भवेच्चामीकरं शुभम् ॥ ११८ ॥

सम्मुखं चारणं वक्ष्ये रसेन्द्रस्य विशेषतः ।
सर्वेषामेव लोहानां ताम्रं रञ्जनमुच्यते ॥ ११९ ॥

वङ्गनागायसादीनां रसं कन्यासमाश्रिता ।
तस्मात्सर्वान् रसान् भुक्त्वा धामयेद्धेमतारयोः ॥ १२० ॥

तस्मान्नित्यं सुरञ्जेत सर्वं ताम्रप्रतिष्ठितम् ।
घोषाष्टभागं तीक्ष्णं च सममन्धीकृतं द्रुतम् ॥ १२१ ॥

निर्वहेत प्रकाशायां यावत् तीक्ष्णं क्षयं व्रजेत् ।
समस्तु प्रतिवापेन समद्विगुणमेव वा ॥ १२२ ॥

रक्ततीक्ष्णं सुनिर्वाप्य मृतनागं तु निर्वहेत् ।
त्रिनागशुद्धनिर्वान्तं ताम्रं रुधिरसप्रभम् ॥ १२३ ॥

चारयेत रसेन्द्रेण नवनीतोपमो भवेत् ।
ततस्तु गुलिकां कुर्याद् बदरीफलमात्रया ॥ १२४ ॥

ऊर्ध्वं नियामकैश्छाद्य पातयेत् पातनाविधौ ।
एतन्निहारितं भूयः समद्विगुणमेव वा ॥ १२५ ॥

चीर्णं द्रावस्य मूलिन्या यथावत् पातयेद् रसम् ।
भवेद्वर्णविपर्यासो वृद्धिश्चास्य प्रजायते ॥ १२६ ॥

सुरक्तं द्रावयेच्चूर्णं द्रावणाविधिभिर्द्रुतम् ।
निष्पीड्य चारितं भूयः पिण्डितं चारयेद् रसम् ॥ १२७ ॥

अभ्रसत्वं च हेमं च समं द्रावयते बुधः ।
याजितं हेमकाचेन तद्द्वयं समतां व्रजेत् ॥ १२८ ॥

दग्धा सर्वाणि चास्थीनि मेषशृङ्गं सटङ्कणम् ।
विष्ठावर्गं च संलिप्य मूषायां धामयेद् भृशम् ॥ १२९ ॥

---

१. 'भ्रे' क. पाठः. २. 'शो' ख. पाठः.

एवमेकगतं श्लक्ष्णं सूक्ष्मचूर्णं तु कारयेत् ।
चारयेत् षोडशांशेन यावदष्टममावहेत् ॥ १३० ॥

दीपयन्त्रास्थितं वापि त्रिसङ्घातेन वा यथा ।
जारितं जारणविधौ जारयेद् बीजमुत्तमम् ॥ १३१ ॥

सारितं द्वादशांशेन कारकेतकषयुक्तम्[1] ।
षष्ठांशहेमेन युक्तं कल्याणमुत्तमम् ॥ १३२ ॥

एतेन रक्तशुल्वेन समहेमं विलापयेत् ।
ततः प्रकाशमूषायां निर्वपेद्धेमशेषितम् ॥ १३३ ॥

रक्तं च निर्मलं व्याप्य तीक्ष्णं कृत्वा समाक्षिकम् ।
हेमभागं पुनर्दत्त्वा तत्समं च कनीयसम् ॥ १३४ ॥

निर्वहेत यथापूर्वं दीर्घश्वासैः शनैः शनैः ।
एवं त्रिगुणनिर्धान्तं पुटपक्वं सुरञ्जितम् ॥ १३५ ॥

ज्योतिस्तैलनिषिक्तं च भवेद्विद्रुमसप्रभम् ।
द्रावितं सारितं बीजमेतत् सूतकरञ्जनम् ॥ १३६ ॥

तारं क्षेत्रीकृतं कृष्णं करोत्येकेन काञ्चनम् ।
पाण्डरं च दशांशेन हेमं चोत्कर्षयत्यपि ॥ १३७ ॥

रक्तं निर्हारितं[2] सूतं समं पादमथाधिकम् ।
ताम्रक्षयं यदा पश्येत् पाचयेदौषधैरिमैः ॥ १३८ ॥

सुनिषण्णोऽग्निपर्णी च ब्राह्मी मण्डूकपर्णिका ।
शुका च (काच ?) काकमाची च समङ्गा वीतचोरगम् ॥ १३९ ॥

आयसे भाजने पक्वं पर्णं[3] वा व्यासगन्धकम् ।
ताम्रचूर्णं च नागं च वापं दत्त्वा तिलान् वपेत् ॥ १४० ॥

असनत्वक्कषायं तु गोमूत्रेण तु पाचयेत् ।
निषिञ्चेद् बहुशो यावन्नश्यते नागगन्धता ॥ १४१ ॥

अभ्रसत्त्वं त्रिभागेन रसेनाक्षयभीरुणा ।
चारयेज्जारयेच्चापि सममर्धं स्वशक्तितः ॥ १४२ ॥

---

१. 'कारे विगतकष' क. पाठः. २. 'र्वि', ३. 'वर्णं व्याप्य स' ख. पाठः.

पारतं वैष्णवं गन्धं हरितालं मनश्शिला ।
एकैक एषां भागः स्याद् दन्तिक्रान्ताम्रवन्दनैः ॥ १४३ ॥

नगोदरीरसेनापि पाचयेन्मर्दयेत् तथा ।
अग्निवर्ण्यास्तु मूलेन गन्धकेन द्विशीर्षके ॥ १४४ ॥

वर्त्तिं चूर्णेन सन्दीप्य तैलेनोज्ज्वलयेद् बुधः ।
बीजोत्तरेण मञ्चार्य द्रुतं तारं प्रलेपयेत् ॥ १४५ ॥

प्रलिप्तं चातपे शोष्य यावत् कार्ष्ण्यमुपागतम् ।
ततः पञ्चमसारेण संयुक्तं कनकं भवेत् ॥ १४६ ॥

दशांशेनाष्टमांशेन युक्तं शीतं निधापयेत् ।
मासे मासे विवर्धेत यावन्मेलिततत्समम् ॥ १४७ ॥

नागं तैलस्थं सारयित्वा रसेन्द्रं कृत्वा तत्तुल्यं चारयेन्नष्टपिष्टम् ।
दत्त्वा तालादींश्चूर्णितान् सर्वधातून् लिप्त्वा नाडीं पातयेत् कोशगर्भम् ॥

एवं त्रिः कृत्वा पातितं रक्तवर्णं दत्त्वा बीजं स्याद् द्रावणं दीपिकायाम् ।
वापं लेपं पातने तस्य कृत्वा विद्धं वङ्गं जायते पीतकाभ्रम् ॥ १४९ ॥

अथोत्तरं प्रवक्ष्यामि यथावच्चारणाविधिम् ।
येन चीर्णोऽग्निसंस्था + तेन चीर्णो भवेद्रसः ॥ १५० ॥

सर्वेषां मूलिभिः श्रेष्ठाः सक्षीराः पञ्चजातयः ।
मूलिनां च यथालाभं सर्वेषां समचूर्णितम् ॥ १५१ ॥

तण्डुलैश्च समायुक्तं कोद्रवे मदनस्य च ।
माहिषेण च मस्तूनि पिष्ट्वा यन्त्रार्कसम्पुटम् ॥ १५२ ॥

शेषमाम्लैश्च गन्धैश्च पक्वं किण्वमिति स्मृतम् ।
तत्किण्वं द्विगुणैकस्य पञ्चजातिर्वनस्पतेः ॥ १५३ ॥

पूतिलोहद्वयं वापि एकैकं सङ्करेऽपि वा ।
स्वैः स्वैश्च रिपुभिर्हत्वा चूर्णेनोपरसादिकम् ॥ १५४ ॥

टङ्कणं लवणैर्युक्तं पेषितं लेपयेत् ततः ।
शोषितं कांस्यपात्रस्थं मदिरादिसुसंस्कृतम् ॥ १५५ ॥

---

१. 'ष्क', २. 'प', ३. 'रो' क. पाठः.

सर्वेषामासवविधिं सामान्यं सम्प्रकीर्तितम् ।
पूतिसङ्करचूर्णं च गगनं च समन्वितम् ॥ १५६ ॥
सन्धानेन सुसंयोज्य मासमेकं निधापयेत् ।
शुल्वे वा कांस्यपात्रे वा त्रपुण्यप्युषितासवः ॥ १५७ ॥
एतत्सुरा सुखग्राही सामान्यो विधिरुत्तमः ।
पूतिकं शुल्बमेवं वा पञ्चजातिवनस्पतेः ॥ १५८ ॥
स्वरसं चाम्लसंयुक्तं बहुवारं निषेचितः ।
तत्तोयं पाचयेद् युक्त्या सुरासुरसमागतः ॥ १५९ ॥
सुरक्तं चोक्तमार्गेण सम्मुखं चारणं सुखम् ।
अभ्रके घनलोहे वा शैलेन्द्रे तीक्ष्णमाक्षिके ॥ १६० ॥
पञ्चमं च नियोक्तव्यमेवं चोक्ते सुरारसम् ।
घोषवङ्गारभोगीनामभ्रं च क्राथयेद् भृशम् ॥ १६१ ॥
पूर्वसान्विश्च तेनैव पूर्वसुर + + + + ।
(इ)यं शृङ्खलिका नाम सामान्यं रसचारणम् ॥ १६२ ॥
क्षुद्रमत्स्यैर्घनं पेष्य समतुल्ये विलापितम् ।
शीतीभूतं ततो ज्ञात्वा गालितं चासैवर्युतम् ॥ १६३ ॥
घनं सन्द्रावितं तद्वदेकीकृत्य तु[1] सूतकम् ।
सन्धाने चारितं पिण्डं[2] चामीकरदलानिव ॥ १६४ ॥
कांक्षिसैन्धवकासी(सं ? स)चिञ्चामलकदाडिमैः ।
मातुलुङ्गजलोपेतैः शुल्बाद्यैस्तद् भवेद् द्रवम् ॥ १६५ ॥
तद्युक्तैः स्वर्चिगन्धाह्वैः[3] तुम्बी न्यस्य रसाभ्रकम् ।
पिण्डीभूतं ततो ज्ञात्वा चारणैर्जारणैस्तथा ॥ १६६ ॥
काक्षीवर्षाभुयुक्ताम्लैस्ततं सूतं क्रमाद् बुधः ।
उपलैर्मारयेद् यावत् तावत्सूक्ष्मत्वमागतम् ॥ १६७ ॥
शुष्कं शुष्केण सम्पिष्टं स्नुहिक्षीरसमान्वितम् ।
समभागमितैर्द्रव्यैर्योजितं पाचयेत् पुटे ॥ १६८ ॥

---

१. 'न' क. पाठः. २. 'विद्ध वा' ख. पाठः ३. 'चै' क. पाठः.

स्वर्चिसैन्धवसिन्धूत्थकाक्षिकासीसमाक्षिकैः ।
करवीरा(ख्यं ? ह्वयं) चूर्णं सचतुर्गुणतुत्थके ॥ १६९ ॥

ततः शुक्तेन संयुक्तं ताम्रे पात्रे निधापयेत् ।
पश्चात् सुसाधितं ज्ञात्वा तं घनं चारयेद् रसम् ॥ १७० ॥

जलूकावद्भवेच्छेद्यं पिण्डतां याति सूतकः ।
काक्षिकासीससिन्धुं च सूक्ष्मचूर्णपरिस्नुते ॥ १७१ ॥

शुक्तेसौ सजीमूतं चूर्णं शुल्वे निधापयेत् ।
त्रिरात्रे समतिक्रान्ते ताम्रपत्रद्वयेन च ॥ १७२ ॥

अनुलेपं प्रदातव्यं शोषयित्वा पुनः पुनः ।
ततः पुटविधानेन सन्धिं लिप्त्वा शनैर्धमेत् ॥ १७३ ॥

निर्गच्छति यथा ज्वाला शतायुधसमप्रभा ।
तद्योम भावयेत् पश्चात् तद्रसैः सन्धितैः पुनः ॥ १७४ ॥

पूर्वोक्तविधिना चैव पारतेन्द्रं स चारयेत् ।
जारितः पावकसमो यथेष्टं जारयेद् बुधः ॥ १७५ ॥

आयसे विपुले पात्रे द्रुतं वङ्गं विनिक्षिपेत् ।
तन्मुष्ट्याभ्रकचूर्णं च घट्टितं च मुहुर्मुहुः ॥ १७६ ॥

ततस्तच्छीतलीभूतं पेषयेत् सह तेन च ।
निर्धान्तं वज्रतुत्थेयं सम्मुखं कारणं परम् ॥ १७७ ॥

स्वर्चिकाक्षिसकाक्षिसे स च तुत्थं च सैन्धवैः ।
ईषद्गन्धसमायुक्तं चूर्णितैः शुक्तिसंयुतैः ॥ १७८ ॥

त्रिरात्रं बन्धयेद् गोलं घृष्टैश्च व्यञ्जनं भवेत् ।
अभ्रसत्त्वं च शैलेन्द्रे तीक्ष्णमाक्षिकचारणम् ॥ १७९ ॥

अपरं सस्यको नाम जायते मणिरुत्तमम् ।
यं प्राप्य रसमातङ्गो गन्धत्वमवगम्यते ॥ १८० ॥

शिखिचन्द्रकसङ्काशो मयूरगलसन्निभः ।
हरितः पाण्डुरक्तं च विन्दुभिः समलङ्कृतः ॥ १८१ ॥

अस्यां विन्दुगुणाभोजगन्धमाघ्राय सूतकः ।
नभसः पाटलान्येव चरेदन्यत्र वाजिवत् ॥ १८२ ॥

चारयेत् सन्धितान्येवं पूर्ववद् धूपितानि वा ।
स्वर्चिकादिं द्रवं दत्त्वा मणिवर्गं च सूतके ॥ १८३ ॥

अतिजीर्णं न कुर्वीत पूर्वोक्तं शास्त्रमाचरेत् ।
हृद्रोगहीनवीर्यः स्यात् + निश्चलत्वसञ्चयः ॥ १८४ ॥

एतदुक्तं नरेन्द्राणां भगवान् सेश्वरो हरिः ।
रहस्यं परमं गुह्यं सम्मुखं चारणं परम् ॥ १८५ ॥

दद्याद्धर्मिष्ठाय (?) श्रीमतां महतामपि ।
+ + + + + + + + न दद्यात्पापकारिणाम् ॥ १८६ ॥

बदरामलकतिन्त्रिणीकबीजपूरै(?)स्तु(परि ? वरी)खेचरसिन्धुडाडिमाम्लैः ।
षडहोषितकांसभाजन(स्थः ? स्थं) घनतीक्ष्णोपलचारणं प्रशस्तम् ॥१८७॥

जारणाकरणं वक्ष्ये सामान्यं द्रा(विणविधम् ? वणाविधिम् ) ।
लोहानां द्रावणं मुख्यमग्निजारुजमिश्रितम् ॥ १८८ ॥

रक्तोपविषगन्धाह्वमेकैकं स्वर्चिका भवेत् ।
त्रिसिन्धुभिः पारतं वा विषसौवर्चमेकतः ॥ १८९ ॥

भागार्धं पारतरसं सर्वमेकत्र चूर्णयेत् ।
एकदेशगतं भूयः स्थापितं काचभाजने ॥ १९० ॥

मदिरां तु शतं भाव्य जलशूकेन जारुणा ।
शतशः शतशो भूयः क्षारपित्ताम्लमूत्रजैः ॥ १९१ ॥

विषक्षारैश्च तं भाव्य लोहानां द्रावणं भवेत् ।
मारितानां विशुद्धानां रञ्जितानां विधीयते ॥ १९२ ॥

तीक्ष्णस्य पारतं मृत्युर्नागं चापि मनःशिला ।
वङ्गस्य हरितालं तु शुल्बं बध्येत गन्धकः ॥ १९३ ॥

---

१. 'र:', २. 'ह' क. पाठः. ३. 'चा' ख. पाठः.

तारं वैष्णवशस्त्रेण तीक्ष्णं विमलतेजसा ।
सर्वेषां मारणं योज्य सिन्धुः स्वर्चकगोमिका ॥ १९४ ॥

भावयित्वा स्ववर्गैस्तु दशपाशनरञ्जनैः ।
विडेन महितं लिप्य प्रक्षिप्याग्निसहं रमम् ॥ १९५ ॥

निर्वाप्योपरि तच्चूर्णं मन्दमूर्षाकृतं द्रुतम् ।
एकीभूतं महस्रांशे तारमिष्टे तु वेधयेत् ॥ १९६ ॥

वेधितं तच्छशाङ्केन हेमेन प्रतिबोधयेत् ।
शुद्धे वा वेधयेत्तारं वङ्गांशं कनकं भवेत् ॥ १९७ ॥

सौवर्चलस्य षड्भागाः सैन्धवस्य त्रयस्तथा ।
स्वर्चिकायास्तु भागस्य विडभागस्तथैव च ॥ १९८ ॥

यवक्षारस्य भागानि टङ्कणं चूर्णदरदम् ।
+ + + + + + + + पारतेन्द्रस्तथैव च ॥ १९९ ॥

मणीनां चोज्झितारचूर्णास्तथा कूर्पस्य भागतः ।
हरिगन्धकमप्येवं ताम्बूलस्य च चूर्णयेत् ॥ २०० ॥

तीक्ष्णादिभिर्गणैः क्षारं रक्तपुष्पैस्तथा तथा ।
भवेद्विषाम्लक्षारसंयुक्तैः सर्वबीजसमन्वितैः ॥ २०१ ॥

क्षारैश्चाम्लयुतैश्चैव सर्वमूत्रपरिस्रुतैः ।
सुदग्धमग्निवर्णं तु शुक्तिशैलकमर्दितम् ॥ २०२ ॥

तथोक्तं लवणेन्द्रेण क्षिप्त्वा भावितजारुणा ।
वोरिश्शकं दहेत् क्षारं क्षेके वैरिमोपितम् ॥ २०३ ॥

तत्क्षारं भाव्य बहुशो जारणालब्धमेव च ।
हंसपाकेन विधिना द्रावणां + विभूषितम् ॥ २०४ ॥

द्रावणं सर्वसत्त्वानां द्रव्येष्वावापमेव च ।
रञ्जनं रसराजेन द्रुतं बीजमहाविडम् ॥ २०५ ॥

गुञ्जादिभिरलङ्कृत्वा दीपराजेन योजयेत् ।
अग्निजिह्वं विडं नाम्ना विडराजं सुपूजितम् ॥ २०६ ॥

---

१. 'स्थ', २. 'पारिशूकं', ३. 'भावित' क. पाठः.

लोहाभ्रकादिभिर्जार्यं जारणं परिकीर्तितम् ।
तिक्ताम्लैः सविडैः क्षारैः पूतिकानिकमोक्षकैः ॥ २०७ ॥

दन्तिचित्रकयोः क्षारैः तिलकुक्कुटजाम्बुजैः ।
अन्तर्धूमं दहेत्क्षारं रसकङ्कुपरिस्रुतैः ॥ २०८ ॥

रागादीनि + णैः क्षारैः सर्वमूत्रसुगालितैः ।
मदनकोद्रवपलाशैश्च सेचयेद् भावयेत् ततः ॥ २०९ ॥

सप्तपर्णी च शतशः संगृह्य घटके दहेत् ।
सर्वैश्च क्षारमूत्रैश्च भावयित्वा पुनः पुनः ॥ २१० ॥

एवं सम्भाव्य बहुशो विषक्वाथेन भावयेत् ।
दत्त्वा सौवर्चलपलं पारतं पारभागिकम् ॥ २११ ॥

अम्बरीषेण विधिना भावयेत् क्षारमुत्तमम् ।
शनैर्विधानसंयुक्तं क्षारं पलशतेन तु ॥ २१२ ॥

एवं सम्भावितं सम्यक् विषकर्णेन भावयेत् ।
भाव्य भाव्य च सप्ताहं विषकर्णमनुत्तमम् ॥ २१३ ॥

संस्पृशेत्तु विषं घोरं शकृन्मध्ये + घातयेत् ।
नाम्ना दावाग्निको लोके द्रावणं बीजमुत्तमम् ॥ २१४ ॥

जारुणा भावयेत् पश्चाद् द्रावणाङ्गं विभूषितम् ।
पूर्वोक्तविधिना कल्पं द्रुतं बीजं न संशयः ॥ २१५ ॥

गुञ्जालाङ्गलिनं[1] गृह्य समूलशाकजम् (?) ।
अन्तर्दग्धमदग्धं च चूर्णेन च समुन्नतम् ॥ २१६ ॥

हठक्षारनिषण्णैस्तु सर्वं मर्द्यात् स्नुहीरसे ।
एतद् गुञ्जादिकं नाम यामकं तुत्थलेपने ॥ २१७ ॥
लोहद्रावणयोगे च दीपरागे तथैव च ।
गुलिकाबन्धसंवेष्ट्य[2] ज्ञात्वा कर्मान्तराणि तु ॥ २१८ ॥
सर्वकर्मादिकं प्रोक्तं गुञ्जादिकमिदं परम् ।
कुंदलकेन्दलकीपाठगुलुचीसुक्षकं[3] स्नुहाम् ॥ २१९ ॥

---

१. 'सं', २. 'पेष्य ज्ञा', ३. 'कदलीकन्दलीपा' क. पाठः.

गोतमेक्षुरको दन्ती कृत्वा भस्म चतुर्गुणम् ।
द्विगुणं शङ्खजक्षारं सर्वमूत्रैस्तु गालयेत् ॥ २२० ॥
पक्वं लवणवर्गेण जारणं विडमुत्तमम् ।
विष्ठावर्गं सलवणं क्षारवर्गैस्तु भावितम् ॥ २२१ ॥
शुण्ठीशुक्तैस्तु सम्भाव्य विडं वैद्युतजारणम् ।
क्षाराणां रक्तपीतानां वापयेत् सर्वमूत्रजैः ॥ २२२ ॥
शङ्खजं सर्वलवणैः रञ्जनं विडमुत्तमम् ।
सर्वोपविषबीजानि काक्षिमाक्षिकगैरिकैः ॥ २२३ ॥
स्वर्चिकासमसंयुक्तं सर्वमूत्राम्लभावितम् ।
गन्धकस्य रसेन्द्रस्य जारणाविडमुत्तमम् ॥ २२४ ॥
सर्वोपरसलोहानां विडमेतद् विशिष्यते ।
विष्ठावर्गं सलवणं सर्वोपविषवारिणा ॥ २२५ ॥
भावितं सर्वपित्तैस्तु जलशूकरसेन तु ।
सर्वोपरसलोहानां विडमेतत्तु जारणम् ॥ २२६ ॥
कीटवर्गं सहिङ्गुं च मूत्रक्षारफलाम्बुना ।
भावयेन्मदिरायां तु सर्वं जारणमुच्यते ॥ २२७ ॥
मयूरग्रीवतुत्थं च रसकं च समुद्धृतम् ।
राजावर्तं च विधिवद् भावयेच्छोषयेत् तथा ॥ २२८ ॥
शिरीषपुष्पस्वरसे वृषमूत्रे महाघृते ।
सुस्विन्नं सप्तरात्रं तु रञ्जनं विडमुत्तमम् ॥ २२९ ॥
सैन्धवं कृष्णकाचं च शङ्खचूर्णं शिलाजतु ।
काक्षिगैरिकमाक्षिकं स्वर्चिकासमयोजितम् ॥ २३० ॥
भावयेत् सागरजले कराह्वफलवारिणा ।
सर्वोपविषतोयेन मलघ्नं रञ्जनं विधम् ॥ २३१ ॥
अपामार्गं च कदली क(द ? न्द)ली शतपर्विका ।
दग्ध्वा भस्म चतुर्णां च गवां मूत्रेण गालयेत् ॥ २३२ ॥

रक्तकैरवकनाथ संप्लाव्य च पुनः पुनः ।
पश्चात्तु हंसपाकेन सामुद्रं लवणं पचेत् ॥ २३३ ॥

अभ्रसत्त्वं ततः कृत्वा खण्डं तण्डुलमात्रया ।
विडेन तेन सञ्छाद्य शनैर्मृद्वग्निना पचेत् ॥ २३४ ॥

दग्ध्वा प्रकाशमूषायां हेमेनान्धीकृतं धमेत् ।
हेमाभ्रसत्त्वयोरेतन्मेलनं विडमुत्तमम् ॥ २३५ ॥

सैन्धवं तालगन्धाह्वं विषं लाक्षासटङ्कणम् ।
कटुत्रिकं मधूच्छिष्टं विषाणं शिखिचन्द्रकम् ॥ २३६ ॥

गुञ्जा भल्लातकं जिह्वा कटुतैलं सकेशजम् ।
एतन्नियामकं युञ्ज्यात् सङ्घाते पातनाविधौ ॥ २३७ ॥

विषवर्गरसप्रस्थं शतावर्या रसस्तथा ।
क्षौद्रं किण्वोदकं स्विन्नं सुरादाशनपाशनी ॥ २३८ ॥

यवाढकं सुरापक्वं फलाम्लेन सुगालितम् ।
त्रिफलातोयसहितं लाक्षात्रिकटुवापितम् ॥ २३९ ॥

इक्षुतोयविमिश्रं तु स्थापितं लोहभाजने ।
सप्तरात्रोषितं सम्यक् सुरेयं सर्वचारिणी ॥ २४० ॥

कुम्भीरशिशुमाराणामन्येषां जलचारिणाम् ।
वसारुधिरलोणैश्च विषवर्गेण लोलयेत् ॥ २४१ ॥

द्रावणं चूर्णमेकं तु दत्त्वा तं लोहभाजने ।
रक्तवर्गं च विधिवद् विषतोये निधापयेत् ॥ २४२ ॥

सर्वोपरसभागं च पलटं काचमेव च ।
दत्त्वा दत्त्वा त्रिरात्रेण काष्ठेन ज्वालयेद् बुधः ॥ २४३ ॥

मासार्धं मासमेवापि सन्निधाप्य नियोजयेत् ।
रसकुक्षिगतानां तु सर्वेषां द्रावणी सुरा ॥ २४४ ॥

क्षारोदकाष्टभागेन वह्निजारुसमं विषम् ।
स्थापितं शैलभाण्डे तु प्रक्षिपेद् भाण्डमेकतः ॥ २४५ ॥

---

१. 'दनवाश' ख. पाठः.

मत्स्यकं रसकं तुत्थं राजावर्तं सुपारतम् ।
शिलालगन्धकासीसं लाक्षातैलगतं घृतम् ॥ २४६ ॥
प्रसन्ना किण्वसहितमिक्षुदस्य रसस्तथा ।
विडोपविषभागानि सुरेयं रञ्जनी मता ॥ २४७ ॥
विषोपरसवर्गं च मधुना समयोजितम् ।
किण्वाम्निजारुमष्टांशं भागेकं घटितं मुहुः ॥ २४८ ॥
प्रक्षिपच्चामलं चूर्णमातपे शोषयेत् पुनः ।
स्थापयेत् तुम्बिनीपात्रे सुरेयं रसबन्धनी ॥ २४९ ॥
रसोपरसवर्गेण पक्षिवर्गाष्टमांशिकम् ।
प्रवालचूर्णषड्भागं विष्ठातैलं समांशिकम् ॥ २५० ॥
योजयेन्मधुसर्पिर्भ्यां किण्वोपविषभागिकैः ।
रक्तपीतगणैर्युक्ता रससम्पातनी सुराम् ॥ २५१ ॥

इति महोदधौ रसोपनिषदि अत्रकद्रावकाधिकरणं नाम
पञ्चदशोऽध्यायः ॥

---

## अथ षोडशोऽध्यायः ।

तापीयस्यां समुद्भूतं माक्षिकं चोत्तमो रसः ।
तत्क्षणेन तत्समं कृत्वा मूषायामन्धितं धमेत् ॥ १ ॥
पूर्वशुद्धस्य ताम्रस्य पलैः सप्तभिरन्वितम् ।
भूतस्तमन्धितं कृत्वा गन्धकेन तु घातयेत् ॥ २ ॥
तच्चूर्णं पारतसमं मातुलुङ्गाम्लमर्दितम् ।
सप्ताहं ताम्रपिण्डेन मातुलुङ्गरसेन च ॥ ३ ॥
गोशृङ्गे च ततः स्थाप्य पचेत्तं तु सुबुद्धिमान् ।
सप्ताहं विधिवत् स्विन्नं दशांशेनैव वेधयेत् ॥ ४ ॥
तेनैव वेधयेत्तारं भवेद्धेमं न संशयः ।
वर्णप्रसादनार्थं तु क्षिपेद्धेमाष्टकं पुनः ॥ ५ ॥
एष लक्ष्मीपतिर्नाम क्रिया दारिद्र्यनाशिनी ।
यवक्षाराक्षकासीसं स्वर्चिकाञ्जनसैन्धवम् ॥ ६ ॥

पले पक्वरसैर्युक्तं वङ्गतारपलं पलम् ।
मृतकाभ्रकयोर्द्वे द्वे तालकापलपञ्चकम् ॥ ७ ॥
तारवङ्गद्रुते सूते तालकप्रतिवापिते ।
मारितं च स्नुहिक्षीरैः प्रगुसैरेकतः कृतम् ॥ ८ ॥
मर्दयेत् पयसा चैव स्नुहायां स्वेदयेदपि ।
सप्ताहमम्लिताः सर्वे आयुधेनापि सच्चिषट्[1] ॥ ९ ॥
शुल्बं कुर्वन्ति वापेन पाण्डरं गन्धवर्जितम् ।
नागार्जुनमुनिः श्रीमान् दृष्टयोगमिदं परम ॥ १० ॥
दक्षिणे केरलेन्द्रस्य राष्ट्रे वनसमाकुले ।
नातिदूरे समुद्रस्य ग्रामे प्रीतिसमाह्वये ॥ ११ ॥
ततः पिप्पलिसंस्थानाः पाषाणा हेमधातवः ।
तानादाय प्रयत्नेन श्लक्ष्णचूर्णानि कारयेत् ॥ १२ ॥
चूर्णीकृतांस्तु तान् सर्वान् हयरक्तेन भावयेत् ।
मानुषेण च रक्तेन सप्तवारान् द्रवीकृतान् ॥ १३ ॥
पुनस्तु तुलसीतोये पञ्चगव्येन पेषयेत् ।
शोषयित्वा यथान्यायं मूषालेपं तु कारयेत् ॥ १४ ॥
छिद्रयन्त्रविधानेन पातयित्वा रसोत्तमम् ।
तद्रसं शुल्बमादाय शतांशेन तु विध्यति ॥ १५ ॥
तस्य शुल्बस्य चैकेन रञ्जितं द्विगुणं भवेत् ।
काञ्चनस्य तु भागेन मिश्रयित्वा द्रवीकृतम् ॥ १६ ॥
निषेकं मधुमिश्रं च क्षीरसर्पिर्गुलान्वितम्[2] ।
तद्भवेत् काञ्चनं श्रेष्ठं जाम्बूनदसमप्रभम् ॥ १७ ॥
तृतीयामपि वक्ष्यामि पिप्पलीनां क्रियाविधिम् ।
दशपिप्पलिभागांस्तु सूक्ष्मचूर्णानि कारयेत् ॥ १८ ॥
सविमरस्य भागः स्यान्नागभागसमन्वितः ।
तृतीयं माणिमन्थस्य भागेनैकेन मिश्रयेत् ॥ १९ ॥

---

१. 'द्वि', २. 'ते' क. पाठः.

मिश्रयित्वा यथान्यायं भावयेच्च पुनः पुनः ।
लाक्षारसं ततः कृत्वा भावयेच्च विचक्षणः ॥ २० ॥

रजतारिष्टमावर्त्य तनुपात्राणि कारयेत् ।
तत्पत्रलेपनं कृत्वा गोमयाग्नौ पुटे पचेत् ॥ २१ ॥

एकविंशतिवाराणि यावत्तारावशेषितम् ।
तदावर्त्य निषेकं स्याद् गव्यं मधुगुणान्वितम् ॥ २२ ॥

भवेत्तु कनकं श्रेष्ठं जाम्बूनदसमप्रभम् ।
पिप्पलीनां चतुर्थीं तु क्रियां धन्यां शुभान्विताम् ॥ २३ ॥

दशपिप्पलिभागांस्तु श्लक्ष्णचूर्णानि कारयेत् ।
पारतं गन्धपाषाणं माणिमन्थं समाक्षिकम् ॥ २४ ॥

कुनटीशकलेन्द्रं तु गैरिकं च सुराष्ट्रिकम् ।
रक्ततुत्थसमानं च नागभागांस्तु कारयेत् ॥ २५ ॥

बीजपूररसेनैव चूर्णयित्वा तु भावयेत् ।
पेषयित्वा तु विपचेत् क्षारमूत्रे तथैव च ॥ २६ ॥

भावयित्वा तु बहुशो निवाते स्थाप्य बुद्धिमान् ।
तच्चूर्णं वा शतांशेन तारं कुर्वन्ति काञ्चनम् ॥ २७ ॥

अथातो वैक्रान्तकल्पं व्याख्यास्यामः —

वैक्रान्ततीरसम्भूतो रसो वैक्रान्तकः स्मृतः ।
इहानुग्रहकारी च पर्याप्तं त्वेक[1] एव हि ॥ २८ ॥

तस्य क्षेत्रं प्रवक्ष्यामि प्रदेशं ग्रहणाविधिम् ।
तमहं ते प्रवक्ष्यामि जम्बूनां मध्ययोरपि ॥ २९ ॥

वल्कले तु परे देशे विक्रान्ता नाम निम्नगा ।
हिमवत्पादसम्भूता तृणगुल्मविवर्जिता ॥ ३० ॥

गम्भीरनिर्झरा चैव क्वचिदन्तर्गता शुभा ।
सिंहव्याघ्रसमाकीर्णा दुर्गमा व्यालसेविता ॥ ३१ ॥

तस्याप्युत्तरतस्तीर्थं विश्रुतं विश्वपूजितम् ।
कथ्यते देवदेवस्य यत्रासौ विद्यते रसः ॥ ३२ ॥

---

१. 'चेक' ख. पाठः.

अन्येषु चैव देशेषु गिरीणां निर्झरेषु च ।
दृश्यते तु रसो दिव्यो यत्र दिव्यं नदीगतः ॥ ३३ ॥
रूपं तारसमं विद्यां द्दाहीनिस्तमस्तदा ।
चपलो लवणवच्छेदी वैक्रान्तस्तु महारसः ॥ ३४ ॥
स एवोभयगामी च विक्रान्तासम्भवो रसः ।
तस्य कर्मक्रियायोगं विधानं च शृणोतु मे ॥ ३५ ॥
त्रिरात्रोपोषितो भूत्वा शुचिर्देवपरायणः ।
गन्धपुष्पादिभिः सम्यगर्चयेद् रसदेवताम् ॥ ३६ ॥
बलिं निवेद्य शुक्लं च ततस्तं रसमुद्धरेत् ।
गृहीत्वा तं रसं दिव्यं प्रक्षिपेन्मधुसर्पिषा ॥ ३७ ॥
मासमात्रं स्थितं तत्र ततः कर्माणि योजयेत् ।
वैक्रान्तकस्य षड् भागा अष्टौ भागाश्च पारते ॥ ३८ ॥
हेमस्य पञ्चभागं च संयुक्तं भवते घनम् ।
घनस्य तु भवेद्भागः सप्तमांशस्तु सूतके ॥ ३९ ॥
एकेन घनभागेन बद्धो भवति सूतकः ।
तस्य भागौ भवेदेकं सप्तभागस्तु हेमतः ॥ ४० ॥
आवर्त्यं तु ततः कृत्वा संयुक्ते भवते घनम् ।
एवमेतद्धनेनैव षाड्गुण्यं परिवर्तते ॥ ४१ ॥
षाड्गुण्यविधिनिष्क्रान्तं सारणे तु विधानतः ।
षाड्गुण्येन सहस्रान्तं बलवान् हि महारसः ॥ ४२ ॥
लोहानि काञ्चनं कुर्यात् मेरुयोगस्तृणान्यथा ।
वैक्रान्तकस्य षड्भागः सप्तभागस्य पारते ॥ ४३ ॥
हेमाष्टकेन संयुक्तं घनमित्युच्यते सदा ।
एतद्विधिं प्रवक्ष्यामि अक्षये काञ्चने विधौ ॥ ४४ ॥
यावद्धेमं न नश्येत संसूच्य पारतो रसः ।
घनस्य तु भवेद् भागस्त्रिसङ्घातेन पातयेत् ॥ ४५ ॥
पातितं रसमादाय गृहीत्वा रसमाषकम् ।
हेमजैर्माषकैः षड्भिः अन्धमूषागतं धमेत् ॥ ४६ ॥

१. 'नित्यं न', २. 'भागो' क. पाठः.

तेन तीक्ष्णं रसांशेन विद्धो भवति कल्मषः ।
तीक्ष्णेन भागं विध्येत पूर्वभागेन भागशः ॥ ४७ ॥
नागेन वङ्गं विध्येत धर्म धारं तथैव च ।
आरेण तारं विध्येत तत्तारं काञ्चनं भवेत् ॥ ४८ ॥
सूतकान्माषकं चैव वेधार्थं तु प्रदापयेत् ।
पुनर्बद्धो यदा हस्ती शीक्षाम्नायो बलोत्कटः ॥ ४९ ॥
बहूनि बन्धने चान्यं(?) न द्विधा पारतो रसः ।
स एव काञ्चने युक्ते विधिः सूक्ष्मो रसस्य तु ॥ ५० ॥
स एव कार्यं तारेऽपि इदमत्र विशिष्यते ।
दधातु + भवेत्तेन विक्रान्तस्तु नियोजयेत् ॥ ५१ ॥
नागेन हेमं वङ्गेन तारं वङ्गेन वेधितम् ।
बीजेषु विविधा युक्ता उक्ताः संक्षेपतस्तथा ॥ ५२ ॥
तारेण कुरुते तारं काञ्चनेन तु काञ्चनम् ।
प्रत्यक्षं दृश्यते लोके बीजादुत्पद्यतेऽङ्कुरम् ॥ ५३ ॥
अङ्कुराज्जायते शालिः शालिर्वापि यथा तथा ।
यादृशं तु भवेद् बीजं तादृशं तु भवेत्फलम् ॥ ५४ ॥
इह प्रदर्शनं लोके हेमतारक्रियादिषु ।

॥ इति वैक्रान्तकः ॥

ताम्यमेतं प्रवक्ष्यामि सप्त वैक्रान्तकं शुभम् ॥ ५५ ॥
वैक्रान्ते हेमवैक्रान्तस्तारजो रसक्रान्तकः ।
पुष्पवैक्रान्तकश्चैव वज्रवैक्रान्तकस्तथा ॥ ५६ ॥

॥ इति कृत्रिमक्रान्तकम् ॥

एतैस्तु बध्यते सूतो ह्येतैश्चैव हि रज्यते ।
एभिश्च द्रवते चैव एभिश्च कंथते रसः ॥ ५७ ॥
एवं ज्ञात्वा बलं प्राज्ञो वैक्रान्तकमहौजसम् ।
निग्रहार्थं रसेन्द्रस्य निश्चयेन प्रयोजयेत् ॥ ५८ ॥
ज्येष्ठमध्यमयोगेषु उभयार्थे प्रयोजयेत् ।
यादृशैर्लक्षणैर्युक्तं तेषां नामानि मे शृणु ॥ ५९ ॥

---

१. 'न्यतद्दि', २. 'क्रमते' क. पाठः.

आदौ वैक्रान्तसम्भूतं तस्माद् वैक्रान्तकः स्मृतः ।
उभयोर्मध्यमाज्येष्ठान् बध्यते पारतो रसः ॥ ६० ॥

मौम्यो वैक्रान्तको यस्तु सर्वलोहान् निकृन्तति ।
निस्तमश्चपलं चैव भेदी लवणवद्यथा ॥ ६१ ॥

वैक्रान्तकेति संज्ञस्य सर्वतन्त्रेषु पठ्यते ।
उभयार्थं प्रयोक्तव्यं तारे वा काञ्चनेऽपि वा ॥ ६२ ॥

पीतो हेम्नि लघुद्रावि सर्वलोहान् निकृन्तति ।
एतैश्च लवणैर्युक्तं हेम वैक्रान्तकं विदुः ॥ ६३ ॥

काञ्चनार्थे प्रयोक्तव्यं न प्रयुञ्जीत मध्यमे ।
किमर्थमतिपीतत्वा(द्) वीर्यवान् हि महारसः ॥ ६४ ॥

यस्त्वभ्रपटलाभस्तु हिरण्यैरतिदीप्तिमान् ।
वैक्रान्तकगुणैर्युक्तं तारवैक्रान्तकं स्मृतम् ॥ ६५ ॥

मध्यमार्थे प्रयुञ्जीत न प्रयुञ्जीत काञ्चने ।
किमर्थमतिशुक्लत्वाद् वीर्यवान् हि महारसः ॥ ६६ ॥

पीतके पारते यद्वद् द्रवोऽभ्रविलसत्प्रभः ।
स तु वैक्रान्तको ज्ञेयः मधूच्छिष्टे विचक्षणः ॥ ६७ ॥

सद्रवीपारतश्चैव उभयार्थरसस्य तु ।
तत्क्षणाद् द्वन्द्वमायाति तत्तार काञ्चनेन वा ॥ ६८ ॥

सुगन्धपुष्पसुरभि तारवर्णश्च भिद्यते ।
तैरेव लक्षणैर्युक्तः पुष्पवैक्रान्तकः स्मृतः ॥ ६९ ॥

उभयार्थे प्रयोक्तव्यं पारतीयस्य चाङ्कुशम् ।
तत्क्षणाद् द्वन्द्वमायाति तारेण कनकेन वा ॥ ७० ॥

पतितो न भिद्यते　आगन्तो नच तप्यते(?) ।
एवं लक्षणतो ज्ञेयो वज्रवैक्रान्तकः स्मृतः ॥ ७१ ॥

चिकित्सां तस्य वक्ष्यामि द्रावणार्थं रसस्य तु ।
लाङ्गलीवज्रकन्दश्च स्नुहवक्राश्च भेदकः ॥ ७२ ॥

---

१. 'धा', २. 'पतते पा', ३. 'ले', ४. 'ह्यवक्राश्च' क. पाठः.

कदली कन्दली चैव मेषशृङ्गस्त्वचस्त्रिधा[1] ।
कुलस्थरससंयुक्तं कल्कं कृत्वा तु पेषयेत् ॥ ७३ ॥
सुलिप्तमेतत् कथितं वज्रवैक्रान्तकं तथा ।
धामयेत् खदिराङ्गारैः सुदृढं बहुलाग्निना ॥ ७४ ॥
सुतप्तश्च निषेक्तव्यः कुलस्थस्वरसे शुभे ।
एवमेतेन कल्केन कृत्वा चैव त्रिसप्तकम् ॥ ७५ ॥
द्रवती नागवत् पश्चात् भिद्यते चाञ्जनं यथा ।
एवमाशापितं कृत्वा लघुद्रावित्वमागतम् ॥ ७६ ॥
उभयार्थे प्रयोक्तव्यं ज्येष्ठमध्यमयोः क्रमात् ।

॥ इति वैक्रान्तकल्पः ॥

वैक्रान्तकरसं प्राप्य त्रिषु लोकेषु विश्रुतम् ॥ ७७ ॥
स तु सप्तविधः प्रोक्तः कर्म तस्याप्यनेकशः ।
सितं रक्तं तथा पीतं नीलं पारावतप्रभम् ॥ ७८ ॥
मयूरगलकप्रख्यं सप्तमं मरतकप्रभम् ।
तस्य कर्म प्रवक्ष्यामि यादृशं यस्य जायते ॥ ७९ ॥
सितं चव्याङ्घ्रिकन्देन चूर्णयित्वा द्रुतं बुधः ।
स्वेदयेत् कर्पटे रक्ते दिनार्धं दिनमेव वा ॥ ८० ॥
सुविस्विन्नं तदा प्राज्ञः प्रक्षिपेत् पारतं रसम् ।
तत् क्षणाज्जायते भस्म हयमूत्रेण स्वेदयेत् ॥ ८१ ॥
सुनिर्वाणं तु तं दृष्ट्वा पलं पलशते क्षिपेत् ।
तारे स भस्मतां याति विशुद्धस्फटिकाकृतिः ॥ ८२ ॥
समं सूतेन तद् भस्म मेलयेत विचक्षणः ।
बद्धो रक्तश्च सूतोऽसौ भवेदग्निसहस्तथा ॥ ८३ ॥
तापितो द्रावितश्चैव सन्तो वर्षशतान्यपि[3] ।
क्षयं न गच्छति प्राज्ञस्ततः कर्म समाचरेत् ॥ ८४ ॥

---

१. 'स्तथा', २. 'ध', ३. 'मेसु योजयेत्' क. पाठः.

स्पर्शैश्च सर्वलोहानि रजतं संस्करिष्यति ।
कोटिवेधी भवेत्तेन यथाविधि नियोजितः ॥ ८५ ॥
रक्तस्य तु भवेत् कर्म स तु दारिद्र्यनाशनः ।
व्याघ्रपादस्य कन्देऽर्द्धं मासं तु स्वेदयेद् बुधः ॥ ८६ ॥
यत् स्विन्नं हयमूत्रेण सप्तवारं तु भावयेत् ।
रसस्य पलशते पलमेकं क्षिपेद् बुधः ॥ ८७ ॥
भस्म भवति तत् सर्वं पुनर्हेमशते क्षिपेत् ।
तदापि जायते भस्म शुद्धं हेमसमप्रभम् ॥ ८८ ॥
तस्मिन् रसवरेन्द्रेण पुनरर्धेन मेलयेत् ।
तस्मादग्निसहो ह्येषः नानाकर्मसु योजयेत् ॥ ८९ ॥
स्पर्शवेधी तदायोज्यं कोटिसारो भविष्यति ।
सर्वान् हेममयान् लोहान् स करोति नियोजितः ॥ ९० ॥
दारिद्र्यनाशनो लोके पारतेन्द्रो भविष्यति ।
पीतको हेमकारी स्याद् व्याघ्रिकन्दे नियोजितः ॥ ९१ ॥
भावितो हयमूत्रेण पारतीये महारसे ।
पलं पलशते क्षिप्य पुनर्हेमेन तत्समम् ॥ ९२ ॥
तद्भस्म भवते + स्तेन्द्रुतहेमसमप्रभम् ।
कोटिवेधि भवेदाशु शुल्बस्य तु महारसः ॥ ९३ ॥
नीलीकुमारिकामूले स्वेदयेदर्धमासिकम् ।
हयमूत्रेण सम्मिश्रं पलं पलशते क्षिपेत् ॥ ९४ ॥
तत्क्षणात् भस्मतां याति सूतको नात्र संशयः ।
तद्भस्म सवसूतेन सार्धं हेमेन योजितम् ॥ ९५ ॥
वेधते सर्वलोहानि स्पर्शवेधी महारसः ।
पारावतस्य कर्माणि विविधानि शृणोतु मे ॥ ९६ ॥
स्विन्नं पूर्वोक्तमार्गेण मेलितं तु महारसः ।
चारिते हेमपादेन हेमकारी रसोत्तमः ॥ ९७ ॥

१. 'सू', २. 'धी', ३. 'क्षो' क. पाठः.

मयूरगलकप्रख्यं स्विन्नं चूर्णं सुयोजितम् ।
एवं रसवराः सर्वे हेमतारकरा भवेत् ॥ ९८ ॥

योजितो विधिदृष्टेन प्रकुर्वन्ति न संशयः ।
कुमारीस्कन्दरसं हयमूत्रेण स्वेदितम् ॥ ९९ ॥

पारतस्य पलशते भस्मतां याति सूतकम् ।
पादचीर्णं ततो हेमं रसो बद्धो भविष्यति ॥ १०० ॥

स्पर्शेन सर्वलोहेन तद्रसं कनकं भवेत् ।

मेढपाटे स्वाटे वैराटनगरे नेपाले चमूरङ्गे काश्मीरे आन्ध्रदेशे श्रीपर्वते द्रमिलदेशे करहट्टे च जायते ॥

बदरामलकतित्तिरीयकाणां परिखे सैन्धवडाडिमाम्बुमिश्रैः । क्षाराणि त्रीणि लवणानि पञ्च सौवीरे प्रक्षिप्य क्वाथयेत्ताम्रभाजने तां कार्ञ्जीं गृह्य शतांशेन वैकृतपूर्लिं प्रक्षिप्य रसं मर्दयेत् । प्रहरणे द्रवीभवति । लोहभाजने तत्रैव स्थाप्य सौवीरेणापूर्य कर्षतुषाग्नौ स्थापयेद्रात्र्येकं प्रभाते उष्णाम्बुना प्रक्षालयेत् तं रसं संगृह्य मरीचिविषसैन्धवासुरीणां सौवीरे सम्पेष्य पिण्डं कृत्वा तत्रैव पिण्डे रसं प्रक्षिप्य कर्पटे बद्ध्वा डोलास्वेदं तु कारयेत् । अहोरात्रं तु रञ्जितो भवति वज्रमूषां कृत्वा अत्र मूषालेपं कारयेत् । बहळं शोष्यात्र रसं प्रक्षिप्य बीजं शोभनं समं दत्त्वा रसस्योपरि शीकरतयोपरि-पूर्यान्धयित्वा सम्यक् सुलेपयित्वा खण्डित्वा जानुमात्रेणापूर्याधोमूषां स्थाप्य उपरिपूर्याहोरात्राणि त्रीणि अत्राकृष्य तप्ताङ्गारे स्थाप्य बहलाग्निना धमेत् । यावत् क्लिन्ना मूषा विष्णुक्रान्ता सर्पाक्षी तथा च जलकन्दळीन्द्रवारुणी-मूलं कल्के विश्रामयेत् । प्रक्षाल्य लोहभाजने स्थाप्य रसमर्कपत्ररसं टङ्कण-सैन्धवैर्मर्दयेत् शतांशेन वेधं पुनस्तेनैव मार्गेण जारयेद्यावदालोकवेधिम् ।

अस्ति दाक्षिणापथे शेषणविषये राशिनं नाम ग्रामः । तस्य पश्चिमोत्तर-दिग्भागे महादेवायतनस्य समीपे देवलोहं नाम लोकविख्यातं महारसं स्वयमेवोत्पन्नं प्रावृट्काले मेघगर्जितशब्देन पातालान्निर्गच्छति । चतु-र्विधं च विख्यातं महारसं श्वेतपीतरक्तकृष्णसमाख्याता खन्यमाने समुत्पन्ना दृश्यते तु महारसः । तस्य लक्षणं वक्ष्यामि ।

---

१. 'ह्यानि त', २. 'णा', ३. 'पद्रो', ४. 'नि', ५. 'धी', ६. 'षु', ७. 'तकृष्णरक्तपीतस' क. पाठः.

निस्तम्भं निर्मलं ++ ऊरुकोमलमेव च ॥ १०१ ॥

तापयित्वा तु तान् सर्वान् आमलक्या रसे क्षिपेत् ।
चतुर्विधं शोधयित्वा पञ्चगव्येन बुद्धिमान् ॥ १०२ ॥

गोमयस्य पलं गृह्य गोमूत्रस्य पलत्रयम् ।
आज्यस्य च पलान्यष्टौ समेन क्षीरदध्नयोः ॥ १०३ ॥

कुशोदकेन संयुक्तं पञ्चगव्यमिति स्मृतम् ।
निषेकं तत्र दातव्यं गतमेकं तु शोधितम् ॥ १०४ ॥

शोधयित्वा तु गुलिकां कारयीत प्रयत्नतः ।
मूलेषु[1] धारयेन्नित्यम् आयुष्यार्थी विचक्षणः ॥ १०५ ॥

जरामृत्युविनिर्मुक्तोऽमरत्वमवाप्नुयात् ।
देवलोकस्य +++ त्वब्दमेकेन बुद्धिमान् ॥ १०६ ॥

उपरिष्टाद्धारयेद्यस्तु मेधावी प्रियदर्शनात् ।
न क्रमेद्रसविध्यस्य विषं स्थावरजङ्गमम् ॥ १०७ ॥

अकालपलितं मुक्त्वा नवयौवनगर्वितः ।
पूर्णे संवत्सरे विद्वान् न क्वचित् प्रतिहन्यते ॥ १०८ ॥

स तत्राभ्यासयोगेन जीवेत् कल्पान्तरं नरः ।
हेमस्य[2] रससंयुक्तं सूतकं बन्धयेद् भृशम् ॥ १०९ ॥

सहस्रांशेन तच्छुल्बं भवेत् काञ्चनमुत्तमम् ।
वेधयेत् तद् द्रुतं तारं शततारेण योजयेत् ॥ ११० ॥

तत्सूतकं सहस्रेण तारं शुल्बं च काञ्चनम् ।
रञ्जितं धमनकं कुर्यात् रसस्वेदविधानवित् ॥ १११ ॥

देवस्य पुनरपि कर्म वक्ष्ये —

सर्वेषामेव लोहानां सर्वोपरससंयुतम् ।
स्पृष्टमात्रेण सर्वेषां लोहानां विद्धते(?) रसः ॥ ११२ ॥

सर्वेषामेव लोहानां पुनः कर्म प्रवक्ष्यते ।
पातनं सम्प्रवक्ष्यामि उत्तमं परमाद्भुतम् ॥ ११३ ॥

---

१. 'मुखेषु', २. 'ह' क. पाठः.

चूर्णयित्वा तु लोहानां सूतकेन तु वेधयेत् ।
मातुलुङ्गोदके न्यस्तं स्वेदयेद् दिनमेकतः ॥ ११४ ॥
त्रिफला देवलोहं च समभागानि कारयेत् ।
मधुसर्पिःसमायुक्तं कल्कं कृत्वा तु स्वेदयेत् ॥ ११५ ॥
पूर्वं मधु निषिक्तं तु सुस्थितं च विचक्षणः ।
मासमेकं स्थितं भूमौ प्राशयेत्तु विचक्षणः ॥ ११६ ॥
ज्ञात्वा ह्यग्निबलं चैव उपभुक्ते रसायने ।
व्याधयश्च प्रणश्यन्ति मेधावी च बहुश्रुतः ॥ ११७ ॥
मासमेकप्रयोगेण जीवेद्वर्षाणि चायुतम् ।
सर्वेषामेव लोहानां पुनः कर्म प्रवक्ष्यते ॥ ११८ ॥
चूर्णयित्वा ततो लोहं गोवन्देन तु भावयेत् ।
देवदालिरसेनैव पयसा गोमयान्वितम् ॥ ११९ ॥
एतेन द्रवते शीघ्रं हिमवद्भानुरश्मिभिः ।
चूर्णीकृत्वा ततो देयं मर्दयेत् पारतेन तु ॥ १२० ॥
देवदालिरसं दत्त्वा एकीभवति तत्क्षणात् ।
ततस्तं वेधयेत्तारं नागवङ्गशतांशकम् ॥ १२१ ॥
पत्रलेपेन सप्ताहाच्छोभनं कनकं भवेत् ।
मनःशिला समरिचं सैन्धवं च रसाञ्जनम् ॥ १२२ ॥
बीजपूररसेनैव मूषापत्राणि लेपयेत् ।
धमयेदन्धमूषायां निर्बीजं कनकं भवेत् ॥ १२३ ॥
देवदालिरसेनैव कोशातक्या रसेन तु ।
देवलोहसुचूर्णं तु पेषयेद् बुद्धिमान्नरः ॥ १२४ ॥
त्रिफला निम्बतैलं च श्वेता च गिरिकर्णिका ।
स्वेदयित्वा सकृत्प्राज्ञः पिण्डीबन्धं तु कारयेत् ॥ १२५ ॥
निर्दग्धं तत्समं याति खादिरेण तु बुद्धिमान् ।
मूषायां पतते लोहमिन्द्रगोपकसन्निभम् ॥ १२६ ॥

---

१. 'प्य' क. पाठः. २. 'नम्', ३. 'देयं गो' ख. पाठः. ४. 'द्धं तु चार' क. पाठः.

कुनटीक्षौद्रसंयुक्तं सैन्धवानि च पारतम् ।
मातुलुङ्गरसेनैव मर्दयेत विचक्षणः ॥ १२७ ॥
देवलोहमयस्कान्तं पारतं च मनःशिला ।
गुलिकां धारयेद् वक्त्रे जरामृत्युविनाशिनीम् ॥ १२८ ॥
पूर्वशुद्धस्य लोहस्य रसस्यार्धपलानि च ।
त्रिफलायाः पलं त्रीणि धामयेत् त्रीणि मात्रया ॥ १२९ ॥
खादिराग्निबलं ज्ञात्वा क्रमेणैव परीक्षयेत् ।
मध्वाज्येन समायुक्तं मासमात्रं तु भक्षयेत् ॥ १३० ॥
जरामृत्युविनिर्मुक्तो गुणैरेष समन्वितः ।
अब्देऽब्दमयुतं जीवेत् सर्वशास्त्रविशारदः ॥ १३१ ॥
देवलोहस्य पत्रं तु क्षारकल्केन लेपयेत् ।
स्वर्चिका टङ्कणक्षारं कासीसं सैन्धवं तथा ॥ १३२ ॥
सौराष्ट्रीं च यवक्षारं बस्तमूत्रेण भावयेत् ।
देवदालिरसं चैव कुनटीमरिचानिव ॥ १३३ ॥
सिन्धूत्थं चाञ्जनाभ्यां तु मूषापत्राणि लेपयेत् ।
धमयेदन्धमूषायां निर्बीजं कनकं भवेत् ॥ १३४ ॥
अतःपरं प्रवक्ष्यामि रसायनविधिक्रमम् ।
आमलक्या जातिरसे हेमपत्राणि योजयेत् ॥ १३५ ॥
ततस्त्वेकैकं गृह्णीयाद् घृतमध्वा तु लेपयेत् ।
एकमासप्रयोगेण सर्वव्याधिविवर्जितः ॥ १३६ ॥
द्विमासस्योपयोगेन जीवेत् कल्पायुतं नरः ।

देवलोहकः ।

अथातः संप्रवक्ष्यामि जारणाकाललक्षणम् ॥ १३७ ॥
सर्वसत्त्वहितार्थाय ऋषीणां निर्मितं पुरा ।
सिध्यन्ति सर्वकर्माणि जारणा तु महत्फलम् ॥ १३८ ॥

१. 'शनम्' ख. पाठः.

अग्निजारुक्रियां कुर्यात् तेन दारिद्र्यनाशनम् ।
धनेन लभ्यते कामं धनात्स्वर्गं तु लभ्यते ॥ १३९ ॥
धनेन लभ्यते ख्यातिर्धनेनाशु कुलं पुनः ।
तस्मात् सर्वान् (सर्वैः) प्रयत्नेन जारुं गृह्य च रक्षयेत् ॥ १४० ॥
नापुत्राय प्रदातव्यं नाशिष्याय कदाचन ।
नाप्रियाय प्रदातव्यं हेमयोगमिदं परम् ॥ १४१ ॥
तस्य कर्म प्रवक्ष्यामि सूरिभिः पूर्वनिर्मितम् ।
लवणाम्भसि सम्भूतमग्निजारुरिति स्मृतम् ॥ १४२ ॥
प्राणिजारुसपिण्डोऽयमग्निवत् सागरे जले ।
अग्निजारुरिति ख्यातं स्पर्शवेधी भवेद् रसः ॥ १४३ ॥
स्पर्शवेध्यं तु लोहानि तत्क्षणात् कुरुते भृशम् ।
तस्मादस्पर्शनात् ग्राह्यो लभते पापहा नरः ॥ १४४ ॥
अनादमेघप्रावृट्वृष्टिपाताभिराहिते ।
पारावतं च हंसं च चक्रवाकाग्निकस्तथा ॥ १४५ ॥
शुक्लं च पञ्चमो ज्ञेयो भुक्तिमुक्तिप्रदायकम् ।
मेदको रक्तपादं च पारावतनिभश्च यः ॥ १४६ ॥
स्निग्धाङ्गः कलितश्चैव स पारावत उच्यते ।
तथैवारक्तपादस्तु मुखमूले सबिन्दुकः ॥ १४७ ॥
रक्तहस्तः स विज्ञेयो प्रयातपरिमण्डलः ।
पीतकृष्णौ पदौ चैव तरङ्गललितप्रियः ॥ १४८ ॥
चक्रेषु क्रमविज्ञेयौ चक्रवालाकृतिस्तथा ।
श्यामनीलमयूराणां गृहीत्वा पूर्वलक्षणात् ॥ १४९ ॥
दीर्घमिश्रायुधाकारं लाक्षारससमप्रभम् ।
जपाकुसुमसङ्काशं कार्यं सूर्यसमप्रभम् ॥ १५० ॥
इन्द्रगोपकसङ्काशं जातिहिङ्गुलिकप्रभः ।
जारुः स वह्निको नाम कृष्णमूलं च यद्भवेत् ॥ १५१ ॥
शुक्रपिञ्छनिभो रक्तो मुखमूले स्वरक्तकः ।
इत्येषा जारुरूपं च प्रशस्तं हेमपाचने ॥ १५२ ॥

१. 'वा' क. पाठः.

परीक्षां तस्य वक्ष्यामि ग्रहणोपायमेव च ।
जारुवेगं न भाव्येत सुवर्णं गैरिकं तथा ॥ १५३ ॥
काक्षी च पारतं चैव सैन्धवं च विचक्षणः ।
शुकाग्निचक्रवाकानाम् एकीकृत्य क्षिपेत् पुनः ॥ १५४ ॥
पाचयेत् पञ्चभागेन तैलाष्टकयुतेन च ।
पारावते च हंसे च प्रक्षिपेदधिसैन्धवम् ॥ १५५ ॥
पारावतपुरीषाणां लोध्रस्य त्वचया सह ।
एषपातो निधातव्यः शोधनं नागवङ्गयोः ॥ १५६ ॥
शुद्धाभ्रं नागवङ्गाभ्यामेव तारे विधीयते ।
कृष्णानि चक्रवाकानां तारे वापं च हेमकृत् ॥ १५७ ॥
रजताञ्जनकाचस्य शङ्खचूर्णसमानि च ।
विषसूचकताप्यं च कान्तलोहायसस्तथा ॥ १५८ ॥
समानि च समं कल्कं कृत्वा पापानि वैकृतम् ।
उद्धृते कल्कमेकं च शतं वङ्गस्य तापितः ॥ १५९ ॥
धमेत सुरया प्रोक्तं निषेकं बहुशः शुचिः ।
निस्तम्भं तारमायाति शङ्खकुन्देन्दुसप्रभम् ॥ १६० ॥
पारावते शतगुणमजामूत्रे निषेचयेत् ।
श्रेष्ठं भवति तत्तारं सर्वदोषविवर्जितम् ॥ १६१ ॥
अग्निजारुसुपीतं तु शिलया भावितं पलम् ।
शुद्धवङ्गशतं विद्धं स हि हेमोपजायते ॥ १६२ ॥
मत्स्यस्य वसयामर्द्य सर्वलोहानि काञ्चनम् ।
*महेन्द्रचामीकरतुल्यवर्चसं
शुकजारुसुपीतं तु तालकं तु सुभावितम् ॥ १६३ ॥
स हि हेमोपजायेत मत्स्यस्य वसया सह ।
*घृतेन जीर्णं सह सैन्धवाञ्चितं
*सहस्रभागेन करोति मध्यमम् ।
अतः परं प्रवक्ष्यामि सन्यासविधिमुत्तमम् ॥ १६४ ॥

---

* एतदङ्काङ्किताः पादास्त्रयो लुप्तोहितपादश्चाहत्यैकं पद्यं भाति ।

रसः समुद्रसम्भूतो जारुरित्यभिधीयते ।
मेलितोऽसौ रसेन्द्रेण काक्षिमाक्षिकसैन्धवः ॥ १६५ ॥
अञ्जनस्य तु मूल्येन हरितालमनःशिला ।
एतत्संगृह्य मतिमान् गवां मूत्रे निधापयेत् ॥ १६६ ॥
गोष्ठमध्ये निधातव्यम् इन्द्रगोपकसन्निभम् ।
यं यं स्पृशन्ति लोहानि तत्तत् भवति काञ्चनम् ॥ १६७ ॥
अथास्य कृतकर्माणि समस्तस्य विचक्षणः ।
त्रिविधं जारु संगृह्य घृतभाण्डे विनिक्षिपेत् ॥ १६८ ॥
लवणानि च सप्तानि हंसपाके शनैः शनैः ।
पाचयेत्तु शनैस्तत्र जारक्षारस्वरस्त्वधः ॥ १६९ ॥
प्रक्षिप्य पचनं श्रेयः सप्तयुक्तं च साधकः ।
मधूच्छिष्टं सगन्धाह्वा दग्धाश्चैव शिरोरुहाः ॥ १७० ॥
अग्निवत् स्फोटकं कुर्यात् (क? क)थितात् म्रियते रसः ।
तेन कर्माणि विज्ञानं जारुशोषणमुत्तमम् ॥ १७१ ॥
रक्तं पीतं तथा श्वेतम् अङ्कुशेनोद्धरेत् तदा ।
हस्ते चैरण्डनाले वा वंशनालायुतेन च ॥ १७२ ॥
ग्रहणानि च वक्ष्यन्ते हस्तेनैव न संस्पृशेत् ।
अङ्कुशेन गृहीत्वा तु निक्षिप्यालाबुके पुनः ॥ १७३ ॥
ततस्तु शोधयित्वा तु तैलभाण्डे निधापयेत् ।
मर्दयित्वा विशेषेण छिन्नपक्षस्तु जायते ॥ १७४ ॥
सिध्यन्ति सिद्धलोहानि ग्रथितानि न संशयः ।
अथवा तद् गृहीत्वा तु अङ्कुशे भाजने क्षिपेत् ॥ १७५ ॥
दध्ना जले शोधयित्वा प्रक्षिपेत् कटुकत्रये ।
गन्धपाषाणचूर्णं च विनिक्षिप्यान्धभाजने ॥ १७६ ॥
मासं मासार्धमथवा विधायोद्धृत्य गृह्यताम् ।
एवं द्रवति तेनैव छिन्नपक्षो महारसः ॥ १७७ ॥
वेधनं चैव क्षेत्राणां रसोपरसमारणम् ।
तेषां तु भाजनं वक्ष्ये एकैकस्य पृथक् पृथक् ॥ १७८ ॥

पारावतस्य लवणं हंसस्य सितमभ्रकम् ।
चक्रवाकस्य रुधिरं शुकस्य सितकिंशुकम् ॥ १७९ ॥
अग्निजारु च दातव्यं विषरक्तेन संयुतः ।
दिने दिने तु दातव्यं मासमेकं तु यत्नतः ॥ १८० ॥
मासे पूर्णे ततो ग्राह्यमेतत् कर्म समारभेत् ।
तेन वीर्यकृतं कर्म विषक्षाररसान्वितम् ॥ १८१ ॥
गौतमो मोक्षकस्यैव क्षार इक्षुरसं तथा ।
मप्तपर्णपलाशश्च पूतिकारञ्जकं परम् ॥ १८२ ॥
अपामार्गश्चित्रकदलीकदलीवस्तुपूतिकम् ।
क्षारानन्यान् समाहृत्य घटे दग्ध्वान्वया ततः ॥ १८३ ॥
गोजामाहिषवाजीनामात्ममूत्रं पटेन तु ।
छिद्रेण विमलं कृत्वा शालिपिष्टवदाहरेत् ॥ १८४ ॥
एवं च क्षारमेवास्तु जारुणा सन्ध्य यत्नतः ।
तेन पाककृतं हंसं लवणानि च पञ्च च ॥ १८५ ॥
अथोत्तरं प्रवक्ष्यामि लोहानां तु विशेषतः ।
एकैकं सङ्करं चैव रसेनैव यथा द्रुतम् ॥ १८६ ॥
पूर्वं संशोधितान् लोहान् मध्यमे शत्रुमारितान् ।
पातितान् पातनविधौ द्रावणन्ते(?) नियोजयेत् ॥ १८७ ॥
मूलिभिः शुध्यते लोहो मूलिभिर्म्रियते पुनः ।
रज्यते मूलिभिः क्षिप्रं मूलिभिर्द्रवते यथा ॥ १८८ ॥
तीक्ष्णेन रज्यते वापि रसस्तीक्ष्णेन रज्यते ।
तीक्ष्णेन क्रामणं याति तस्मात् तीक्ष्णं विशिष्यते ॥ १८९ ॥
तीक्ष्णं पत्रीकृतं सम्यक् क्षारमूत्रे प्रवेशितम् ।
स्वर्चिसैन्धवकाचेन काक्ष्या कूर्पेण लेपितम् ॥ १९० ॥
निर्गु(ण्या ? ण्ड्या)स्तु रसे पिष्ट्वा ताप्य ताप्य क्षिपेज्जले ।
एवं संशोधितं तीक्ष्णं पुनः पाकेन पाचयेत् ॥ १९१ ॥
माक्षिकं पञ्चमांशेन चतुर्थांशेन पारतम् ।
स्वर्चसैन्धवयुक्तेन शीर्यते लोष्टवद्यथा ॥ १९२ ॥

मृतस्य तीक्ष्णचूर्णस्य षोडशं पलमाहरेत् ।
आरस्य पलमेकं तु नागं ताम्रं पलं पलम् ॥ १९३ ॥
वङ्गस्य त्रिफला चैव घोषं चैव त्रिभागतः ।
हेमताररसानां तु भागा दशनवाष्टकाः ॥ १९४ ॥
हत्वा स्वरिपुभिः सर्वान् क्षारमूत्रैश्च पाचयेत् ।
विविक्तैर्गालितैः स्वच्छैः स्वेदितैश्च परिस्रुतैः ॥ १९५ ॥
योजितैः शोषितैश्चैव सर्वक्षाराम्लयोजिते ।
निर्यासैर्द्रावणैर्युक्तं शृङ्गचूर्णं ससैन्धवम् ॥ १९६ ॥
गोवसाद्रावणे तैले स्वेदयेदावपे(त्) पुनः ।
मधूच्छिष्टेन वालोड्य टङ्कणेन च लाक्षया ॥ १९७ ॥
छिद्रयन्त्रे चान्धयित्वा पाचयेल्लोहसङ्करम् ।
सङ्करं चूर्णयित्वा तु विडेन द्रावयेत् सह ॥ १९८ ॥
षोडशाहेन भूमिस्थं द्रवते सलिलं यथा ।
जलजान् स्थलजांश्चापि पञ्चजातिवनस्पतीन् ॥ १९९ ॥
यथालाभं समं कृत्वा दग्ध्वा भस्माधिकं त्रिकम् ।
आरुष्करं समङ्गा च जलशूकं समुष्ककम् ॥ २०० ॥
अन्तर्दग्धघटोत्कीर्णं चाढकं स्यात् चतुर्थकम् ।
दत्त्वा मूत्रचतुर्द्रोणं गालयेदेकविंशतिः ॥ २०१ ॥
भस्मद्रोणेन सहितं जलं स्वच्छं यथावहेत् ।
शङ्खं गृह्य महाक्षीरं दग्ध्वा तत्र जले क्षिपेत् ॥ २०२ ॥
टङ्कणं सयवक्षारं स्वर्चिक्षारं तु खेचरम् ।
विडं सैन्धवभागेन सामुद्रं रोमकं तथा ॥ २०३ ॥
कृष्णसौवर्चलैनैतद्धंसपाकेन पाचयेत् ।
दशकृ(त्वा ? त्वः)सितं तोयं पक्षं पक्षं पुनः पुनः ॥ २०४ ॥
कटुत्रिकं सहिङ्गु च कङ्कुष्ठं लाक्षया सह ।
कर्पूरं शृङ्गचूर्णं च प्रतिवाप्य तदुद्धरेत् ॥ २०५ ॥
सर्वत्र सन्निधातव्यं विडं द्रावणमिच्छता ।
गोशृङ्गे सुनिगुप्तं तु स्थापयेद् धूमसन्निधौ ॥ २०६ ॥

त्रिभागच्छेदितं शुद्धं तुम्बिनीफलमुत्तमम् ।
विडार्धं लेपयित्वा + सन्यसेल्लोहसङ्करम् ॥ २०७ ॥

शेषं विडं तथाच्छाद्य सन्धयेच्छेषमेकतः ।
शङ्खमाषकपिष्टेन निश्छिद्रं लेपयेद् भृशम् ॥ २०८ ॥

माषकल्केन संलिप्य चीरयावेष्टितं त्रिधा ।
स्नुहिक्षीरप्रलिप्तं तु बद्ध्वा वा सूत्ररज्जुना ॥ २०९ ॥

ततस्त्रिभूमिकामध्ये संस्थाप्यैवं दृढं पुनः ।
संस्वेदयेत् सदापूर्णे महता जातवेदसा ॥ २१० ॥

एवं सङ्करजं + + विडं सम्मूर्च्छितं परम् ।
पारतोपमविभ्रान्तं द्रवते षोडशाह्निकम् ॥ २११ ॥

सूतकं त्रिफलं गृह्य सर्वकर्मान्तरोद्धृतम् ।
सुवर्णं चारयेत् पश्चात् हिङ्गुमिश्रं फलाम्बुना ॥ २१२ ॥

द्रुतमेकगतं यावन्मर्दयेत् सूर्यरश्मिभिः ।
तदुद्धृत्य महायन्त्रे द्रुतलोहगणं रसम् ॥ २१३ ॥

सूतकं निम्बकाष्ठेन लोलयेद् यावदेककम्[1] ।
ततो द्रक्ष्यति तेजिष्ठं बालार्कसदृशं रसम् ॥ २१४ ॥

मयूरगलकाभासं विद्युज्ज्वलनवर्चसम् ।
शक्रचापनिभाकारं द्रुतं लोहात्मसप्तकम् ॥ २१५ ॥

संशुद्धतारसप्तानां शतानामपि वेधकम् ।
एकभागस्तु सरसो निर्हेमं काञ्चनं भवेत् ॥ २१६ ॥

शीतद्रावणयोगोऽस्य तीक्ष्णस्य विधिरुच्यते ।
येन संयोजितः सूतो बध्यते रज्यते क्रमात् ॥ २१७ ॥

पूतीकरञ्जपालाशं सुरसं मुष्ककं तथा ।
शक्रा(नि ? ग्नि)मन्थसहितं दग्ध्वा भस्म समानयेत् ॥ २१८ ॥

मेषोष्ट्रखरसप्तीनां मूत्रैः क्षारचतुर्गुणैः ।
गालयेत् सप्तवारांस्तु सुप्रसन्नं यदा जलम् ॥ २१९ ॥

---

१. 'त' क. पाठः

अपामार्गं च निर्गुण्डी कदली जलशूकयुक् ।
कदली वास्तुकं चेति दग्ध्वा भस्म चतुर्गुणम् ॥ २२० ॥
गोजाविमहिषाणां तु मूत्रं नागाश्च संयुतम् ।
गालयेद् द्वित्रिधा चैतद्‌भौ संस्थाप्य पाचयेत् ॥ २२१ ॥
सौराष्ट्रिकं रसकासीसं विडं सैन्धवरोमकम् ।
स्वर्चिक्षारं यवक्षारं सामुद्रं टङ्कणायुतम् ॥ २२२ ॥
पाचयेद्धंसपाकेन + पूतक्षारजद्विके ।
दशवारविपक्वं तु द्रावणं सन्निधापयेत् ॥ २२३ ॥
मानुषास्थि शुनोऽस्थीनि चूर्णयित्वा विडेन तु ।
द्विमुखीचूर्णसहितं समं वारुणि मज्जनम् ॥ २२४ ॥
तीक्ष्णं सुश्लक्ष्मसंविष्टं भागमेकं विडं द्विकम् ।
वंशनाले बहिर्लिप्ते जतुना बहलं दृढम् ॥ २२५ ॥
विडमर्धमथ स्थाप्य पुनस्तीक्ष्णं निधापयेत् ।
पुनर्विडेन सञ्छाद्य विधाय दृढसन्धितम् ॥ २२६ ॥
कदलीवनजावन्ध्या जीर्णाग्रां सन्निवेशयेत् ।
नालीं मध्यगतां बद्ध्वा संस्थाप्य द्रुतकर्दमे ॥ २२७ ॥
खनित्वा कटिमात्रं तु ग्रीष्मे सिञ्चेत् सुवारिणा ।
अष्टाह्निके तदुद्धृत्य कान्ताश्मनि निधापयेत् ॥ २२८ ॥
फलाम्लेन निघृष्टं तु दिवसार्धं पुनः पुनः ।
द्रवते सलिलाकारं मयूरग्रीवसन्निभम् ॥ २२९ ॥
अभिप्रोक्ष्य तदाकाशं विमुञ्चेत् कुसुमाञ्जलिम् ।
इत्युक्त्वा सुप्रसन्नात्मा नमस्कृत्वा कृताञ्जलिः ॥ २३० ॥
नमः शिवाय शान्ताय भवाय प्रभवे नमः ।
नमः सर्वज्ञनाथाय सर्वलोकहिताय वै ॥ २३१ ॥
नमः सर्वशरण्याय ध्रुवाय परमात्मने ।
वामाय वामदेवाय व्योमरूपाय शम्भवे ॥ २३२ ॥

१. 'सर्वैः' क. पाठः,

निर्व्याजं पाल्यते तेभ्यः सर्वेभ्यश्च नमो नमः ।
नमोऽस्तु रुद्ररूपेभ्यो यैरिदं धार्यते जगत् ॥ २३३ ॥

नमोऽस्तु नयकर्तृभ्यः सिद्धेभ्यश्च नमो नमः ।
पलाशबीजसहितं सूतकं तु ततोऽश्मनि ॥ २३४ ॥

घृष्टं + प्राश्य बहुशो भवेद् रुधिरसप्रभम् ।
तदग्नौ धामयेत् सम्यक् चतुर्भिर्भस्त्रमारुतैः ॥ २३५ ॥

धाम्यमानोऽग्निसदृशो भ्राजते दीप्तरश्मिभिः ।
सहस्रांशेन तच्छुल्बं वेधयेन्नातिशोधितम् ॥ २३६ ॥

विद्धं विद्रुमविस्पर्धि मन्दारकुसुमप्रभम् ।
अदृष्टपूर्वमेतत् स्याद्धिरण्यं पुण्यमुज्ज्वलम् ॥ २३७ ॥

लोहितत्वात् सुवर्णस्य चतुर्थान्तरमावहेत् ।
षष्ठमष्टमभागं वा ततः कुङ्कुमसन्निभम् ॥ २३८ ॥

वर्णच्छेदे निघर्षे च तापे चोत्तमतां व्रजेत् ।
एतद्धि कनकं भाति शातकुम्भोपमं महत् ॥ २३९ ॥

श्वेतानां तु सुवर्णानां वर्णोत्कर्षणकारकम् ।
एतद् द्रुतहेमसमद्रुतं सारय षड्गुणम् ॥ २४० ॥

बीजवृद्धिं प्रकुर्वीत पुनर्वृद्ध्या सहस्रके ।
सूतकं दरदं ताप्यं विषं काक्षीरसोत्तमम् ॥ २४१ ॥

टङ्कणं मरिचं चैव एकैकं च विभागतः ।
समं सौवर्चलं षट् स्युः सैन्धवं तत्समांशिकम् ॥ २४२ ॥

तीक्ष्णचूर्णं शतं दद्याद् धात्रीफलरसप्लुतम् ।
शैलभाण्डे स्थितं गुप्तं गोकरीषे निधापयेत् ॥ २४३ ॥

संवत्सरगतं दिव्यं द्रवीभूतं सुनिर्मलम् ।
सूतकेन सहेम्ना च योजितं रसमुत्तमम् ॥ २४४ ॥

वेधयेत् सर्वसत्त्वानि सहस्रांशेन हेमताम् ।
क्षारेण शतपर्वण्यसप्तवारान् सुगालितान् ॥ २४५ ॥

तीक्ष्णपत्राणि सन्ताप्य तद्धुद्धूरि + कारयेत् ।
वज्रं चूर्णीकृतं श्लक्ष्णमन्धयित्वा तु धामयेत् ॥ २४६ ॥
कल्कं कौरवकं लिम्पेद् द्रवीभवति तत्क्षणात् ।
पारावतपुरीषं च वाकुचीनां फलं तथा ॥ २४७ ॥
सर्षपार्कपयोन्मिश्रं भावयेद् बहुशः पुनः ।
लेपितं लोहपत्रं तु आतपे शोषितं त्वहः ॥ २४८ ॥
कृष्णार्जुनसपत्रैस्तु श्लक्ष्णमृत्तिकया सह ।
मूषां कृत्वा तु संस्थाप्य द्रावयेल्लोहपत्रकम् ॥ २४९ ॥
तत्पत्रमेवं निर्वाप्य द्रवीभूतं तु दृश्यते ।
तद्रसं लाबुपात्रेण स्थापयेद् रससन्निभम् ॥ २५० ॥
रसेन्द्रेण समं चीर्णं बन्धनं रञ्जनं शुभम् ।
हेमं रक्तं भवेच्छुद्धं कृत्वा मलविलेपितम् ॥ २५१ ॥
द्रावितं चूर्णतां याति द्रव्यैरेतैस्तु योजयेत् ।
सौवर्चलेन शिलया रक्तसैन्धवकेन च ॥ २५२ ॥
एकैकं पञ्चगुञ्जास्ते द्विगुणं तालटङ्कणम् ।
शिखिपित्तं तदेवांशे प्रावृड्मण्डूकमूत्रिकम् ॥ २५३ ॥
स्थापितं काचपात्रे तु पक्षमात्रगतं द्रवेत् ।
सूतकस्याभ्रचीर्णस्य भागो मेवर+स्य च ॥ २५४ ॥
मातुलुङ्गाम्बुना पिष्टमेवमेकगतं स्थितम् ।
तारं पलशतं गृह्य सिन्दूरस्य सहेम तु ॥ २५५ ॥
त्रुटिशः प्रतिवाप्य स्याज्ज्योतिस्तैले करञ्जजे ।
निषिक्तं शुद्धतां याति शुद्धं तत्तारमुत्तमम् ॥ २५६ ॥
शोधिते रञ्जिते तारे रसेन्द्रेण तु वेधयेत् ।
शतार्धविद्धं कनकं दशांशे हेम योजयेत् ॥ २५७ ॥
मात्रातुल्यं भवेदेतत् त्रिसप्ताहान्निधापितम् ।
प्रावृण्मण्डूकमूत्रेण शृङ्गिगोपेन्द्रटङ्कणम् ॥ २५८ ॥

१. 'कु' क. पाठः. २. 'गु' ख. पाठः. ३. 'कृष्णमृ', ४. 'त', ५. 'मेन तु', ६ 'जितम् ।' क. पाठः. ७. 'हा सिद्धापि' ख. पाठः.

सम्मर्द्य चान्धमूषायां बीजं द्रवति चोष्णता ।
तद्भस्म गौनगोपैश्च कटुकैस्त्रिभिरेव च ॥ २५९ ॥
त्रिसप्तवारान् सम्भाव्य काकोदुम्बरिकापयः ।
काञ्चनं द्रवते क्षिप्रं साञ्जने कोपवर्जिते ॥ २६० ॥
तीक्ष्णमेतस्य वापेन द्रवते नात्र संशयः ।
तारं पत्रीकृतं सम्यक् श्लोकसाररसेन तु ॥ २६१ ॥
पक्वं पुटेन सुश्लक्ष्णं पिष्ट्वा पूतीकरञ्जजे ।
मनःशिलोक्तमाक्षीके भावितं बहु सैन्धवम् ॥ २६२ ॥
तत्तारेण समं योज्य क्षीरे सम्भावितं + + ।
स्थापितं काचपात्रे च मासेन द्रवते भृशम् ॥ २६३ ॥
पारतोपममभ्रान्तं भ्राजते शशिरश्मिवत् ।
वंशचूर्णीकृतं श्लक्ष्णं + पञ्चेङ्गुदभस्मना ॥ २६४ ॥
गालितं पञ्चमूत्रेण बहुशो बहुलं पचेत् ।
तत्क्षारभावितं चूर्णं महिषीमललोलितम् ॥ २६५ ॥
अन्धमूषागतं धान्तं द्रवते क्षीरवद् यथा ।
नागं चूर्णीकृतं सम्यग् गौतमक्षीरभावितम् ॥ २६६ ॥
त्रिसन्ध्याकुसुमक्षारे लोलितं महिषीमले ।
द्रावितं द्रावणातैले द्रावणेन विडेन च ॥ २६७ ॥
अन्धितं द्रावयेत् प्राज्ञो द्रवते नात्र संशयः ।
पलाशगौतमक्षारे कदली चेक्षुकस्तिला ॥ २६८ ॥
अपामार्गस्य च क्षारं सप्तमूत्रैस्तु गालयेत् ।
भावितं ताम्रचूर्णेन भावितं चोत्तमापयः ॥ २६९ ॥
त्रिसन्ध्याया रसोन्मिश्रम् अन्धितं भावयेत् पुनः ।
द्रुतं तु तद्रसेन्द्रेण रञ्जयेत्सन्नियोजितम् ॥ २७० ॥
संयुक्तं भ्राजते दीप्तं बालार्कसदृशो रसः ।

---

१. 'गणगो', २. 'द्रा' क. पाठः.

मन्थाग्निमूलं सपुनर्नवं च समेघशुण्ठं कदलीरसेन ।
नागोदरीदुग्धपुटभावितं स्यात् सुतीक्ष्णचूर्णं सह टङ्कणेन ॥ २७१ ॥

संद्रावितं दार्विकरक्तमाला सवञ्जुलीविष्ठनिधापितं तु ।
भवेत् सुतीक्ष्णं सलिलप्रकाशं संक्रामणं सूतकबन्धनं च ॥ २७२ ॥

लवणाभ्रवनार्जुनाम्बुपिष्टं पुटितं त्रिवलु चारयेद् रसेन्द्रम् ।
सुरसं सुरसे तुषाग्निमध्ये रसमभ्रं च चरेत् सुलोहपात्रे ॥ २७३ ॥

सुरसं सुरसे सहारनाले तुषवह्नौ न दधीत नक्तमभ्रम् ।
इति सप्त दिनानि चारितो यः जलकीटप्रतिमो विहाय लौल्यम् ॥ २७४ ॥

लवणस्नुहिपाकयोर्विमिश्रं पुटितं सप्तत एव वैजयन्त्या ।
स्वरसेन सुभावितं शतांशे तरुणैरण्डभवेन भानुतप्तम् ॥ २७५ ॥

विडमूर्ध्वमधो निधापयित्वा जरयेदभ्रकचारितं हि सूतम् ।
रसवङ्गभुजङ्गशुल्बतीक्ष्णैर्निहितैः शत्रुभिरत्र षोडशांशम् ॥ २७६ ॥

दिनसप्तकमेव चारयित्वा वनकार्पासरसोऽग्निकः शिखाभ्याम् ।
सविडेन जरेत् तथाग्निमध्ये कृतमङ्गातसुदीपिकाविधाने ॥ २७७ ॥

नवमर्त्यशिरःकपालगुञ्जाफलकङ्कुष्ठकपित्थकुर्ल्लिरमेषशृङ्गैः ।
मरिचासुरिटङ्कणेन शिग्रोः खदिरं च प्रतिपूर्णयेदशेषम् ॥ २७८ ॥

परिशोधितवंशमेवचूर्णं सममम्भोधरभङ्गमौषधांशम् ।
स्तनजेन कपित्थकाकमाच्या सुरसेनापि सुभाव्य सप्तकृत्वः ॥ २७९ ॥

इदमन्वितमभ्रवज्रतुल्यैः परिवान्तं भृशमैक्यमाशु याति ।
तनुचूर्णितमाषदीपवद्व त्रिगुणं हेमनि निर्वहेद् विधिज्ञः ॥ २८० ॥

प्रतिवार्य सहेम बीजपादं रसमेकं मधुना सुवङ्गनाड्याम् ।
निदधीत दिनैकविंशतिर्वा विषगोपेन्द्रपुटैकमूत्रमिश्रम् ॥ २८१ ॥

प्रतिकीलितलेपिसन्धिवज्रं सुनिगुप्तं शरणैर्विधाय रक्षाम् ।
द्रुतबीजमथोद्धरेद् रसार्कं शुकपात्रोपममुत्तमं रसानाम् ॥ २८२ ॥

ध्वनिजार्कशशाङ्कवैनतेयं पृथगेवाच्छदलीकृतं समांशम् ।
अमुना प्रतिलिप्य सप्त नक्तं त्रितयं धामनि शीतले निदध्यात् ॥ २८३ ॥

---

१. 'वंशाना' क. पाठः,

तत एतदशेषमन्धयित्वा पुनरावृत्य यथाविधि प्रकाशम् ।
मधुसर्पिषि सक्तमुष्णकं त्रिः कनकं स्याज्जननीसमानयोग्यम् ॥ २८४॥

अज्ञानाद्वा निरारम्भात् पथा चित्तविपर्ययात् ॥ २८५ ॥

अश्रद्धानात् शास्त्रार्थे दारिद्र्यादप्रतिश्रयात् ।
औषधानामलाभाच्च दैवतानां च विघ्नतः ॥ २८६ ॥

पापोदयात् पूर्वकृतात् पार्थिवेन्द्रभयादपि ।
दैन्यात् शरीरसम्पर्काद् असहायादसङ्गतात् ॥ २८७ ॥

सन्तोषादप्यविश्वासाद् इन्द्रियाणां प्रसङ्गतः ।
रसं रसायनं मन्त्रं सिद्धद्रव्यमथोत्तमम् ॥ २८८ ॥

न सिध्येत् कारणैरेभिर्यदन्यच्च क्रियान्तरम् ।
इत्येवमनुभुक्त्वा तु कथिता सत्क्रिया मया ॥ २८९ ॥

कृत्वा भुङ्क्ष्व न धन्योऽस्मि दरिद्रोऽस्मीति मा शुचः॥२८९½॥

इति महोदधौ रसोपनिषदि श्रावणाधिकारो नाम
षोडशोऽध्यायः ॥

---

## अथ सप्तदशोऽध्यायः ।

गुह्यबन्धमहं वक्ष्ये सुखोपायं सुखावहम् ।
कर्तव्यं स्वासहायेन भोज्यं सम्पद्विशेषतः ॥ १ ॥

ईश्वरादुमया ज्ञातमुपदिष्टं महर्षिभिः ।
पत्नीनां प्रभवं सौख्यं पारम्पर्येण भुज्यते ॥ २ ॥

पङ्कजाभा तु या नारी यौवनोद्वर्तिनी शुभा ।
श्रीमती सुभगा चैव कामिनी वामलोचना ॥ ३ ॥

तनुमध्या वरारोहा समा सर्वाङ्गसुन्दरी ।
हेमकुम्भस्तनी रामा मुखेन च शशिप्रभा ॥ ४ ॥

राजमात्रोपभोग्या सा गम्भीरा स्यात् सुसंहता ।
सद्रवा मांसबहुला प्रशस्ता रसबन्धनी ॥ ५ ॥

---

1. 'भा' क. पाठः.

सा भवेद्दिव्यक[illegible] [illegible] ।
विचित्राभरणैर्दिव्यैः सुगन्धैश्चानुलेपनैः ॥ ६ ॥

पट्टपर्यङ्कशयना [illegible] ।
ताम्बूलव्यग्रहस्ता [illegible] ॥ ७ ॥

लब्ध्वाहार [illegible] ।
अतिव्याकुल[illegible] [illegible] ॥ ८ ॥

पुरुषोऽनुगतप्राणो दृढकायो दृढेन्द्रियः ।
बलवान् बहुभिर्दोषैर्निर्व्याधिर्निरुपद्रवः ॥ ९ ॥

यवगोधूमशालीनां पिष्टाद्यमथाचरेत् ।
घृतेन पयसा दध्ना स्त्र्क्षगव्येन वा पुनः ॥ १० ॥

भुक्त्वा दिवोभयं रात्रावनुपानं पयः पिबेत् ।
गोक्षुरं सविदारीं वा शर्करामाषमिश्रिताम् ॥ ११ ॥

प्रत्यहं पयसा पीत्वा शतं व्रजति योषिताम् ।
अन्यांश्च विविधान् भोगान् सेवेच्छुक्रबलप्रदान् ॥ १२ ॥

आसवेन सुखोष्णेन चन्दनेन सुगन्धिना ।
निःशेषं रसमुत्सृज्य सम्यक् प्रक्षाल्य शोधयेत् ॥ १३ ॥

शीतोदकेन पश्चात्तु गुह्यबन्धं पुनश्चरेत् ।
एतद् बन्धं महागुह्यं उमया प्रतिभाषितम् ॥ १४ ॥

तस्मात्तु प्राप्तवान्मार्गं शीतबन्धं महोदयम् ।
उशीरं ताम्रभागञ्च हेमभागं समांशिकम् ॥ १५ ॥

सम्यगन्धीकृतं श्लक्ष्णं काक्षिपारतगैरिकम् ।
अभ्रचूर्णेन सहितं सङ्करं चारयेद् रसम् ॥ १६ ॥

षोडशांशेन चाष्टांशं चारितं दिवसं प्रति ।
निष्ठीव्य ताम्बूलरसं सुगन्धां चेन्द्रवारुणीम् ॥ १७ ॥

निष्पीडितं स्वयोनिस्थं भूरिशो मर्दयेद् रसम् ।
पतितं पतितं भूयो योन्यामेव तु निक्षिपेत् ॥ १८ ॥

---

१. 'ट' क. पाठः.

एवं षट्पातितं रात्रौ स्विन्नं खल्वीकृतं पुनः ।
दिवसं मर्दितं चीर्णं पादं चानुक्रमेण तु ॥ १९ ॥

दशरात्रमतिक्रान्तमर्धचीर्णं तु कारयेत् ।
गन्धाह्वयेन सहितं दशरात्रमनुक्रमात् ॥ २० ॥

विमलेन रसं चान्य समर्चीर्णं षडहिके ।
षड्विंशाहात् क्रमात् सिद्धिः पद्मग्रहोत्थापितं रजः ॥ २१ ॥

बन्धनं रञ्जनं चैव क्रामणं च भविष्यति ।
समहेमेन सञ्चीर्णं स्थापितं भगभाजने ॥ २२ ॥

त्रिरात्रे गोलकं बद्ध्वा सा भवेत्तु रजस्वला ।
मासेन सिद्धिमाप्नोति शतवेधी महारसः ॥ २३ ॥

शतांशेन तु तारस्य विध्यात् कल्याणमुत्तमम् ।
तुत्थं वा रसकं वापि संयुक्तं सङ्कराङ्कुशे ॥ २४ ॥

ताम्रं विध्याच्छतांशेन सुरक्तं हेममुत्तमम् ।
बन्ध्या च लभते पुत्रं तेजोबलसमन्विता ॥ २५ ॥

एतद् गुह्यं यथोद्दिष्टं शङ्करेणोमया सह ।
चारणं रसचीर्णेन रसस्याग्निसहो भृशम् ॥ २६ ॥

एतत्सर्वस्य शास्त्रस्य मूलं नोद्बोधयेत् परम् ।
दद्याच्छिष्याय पुत्राय पात्राय हितकारिणे ॥ २७ ॥

कल्कं वा रसकं वापि गोलकं द्रावितं क्वचिद् ।
सत्त्वं वाप्यथवा चूर्णम् अभ्रचूर्णो विशिष्यते ॥ २८ ॥

तस्मादोषधिमास्थाय सुखेनाभ्रकचारणात् ।
जारणं दरदग्राह्यैः कुर्वन् सिद्धिमवाप्नुयात् ॥ २९ ॥

सम्मुखेनोदरग्राह्यैर्बलवान् स्वेदितो रसः ।
वर्धते शशिवद् बालो मासेनाग्निसहो भवेत् ॥ ३० ॥

यन्मूल्याच्चारयेदभ्रं तन्मूल्याच्चारयेद्रसम् ।
पूर्वाह्णे चारयित्वा च तेनैव स्वेदयेन्निशि ॥ ३१ ॥

लोहजे चट्टके स्थाप्य [illegible] ।
द्वात्रिंशांशं चरेत् पूर्वं [illegible] ॥ ३२ ॥

जलूकाखण्डशोवस्था [illegible] ।
चारयेद् ग्राहकेणैव यावदिच्छेत तावता ॥ ३३ ॥

काकविष्ठा [illegible] ।
येन वा चारणा [illegible] ॥ ३४ ॥

ओषधीनामलाभे तु लोहानां भुक्तश्चरेत् ।
षण्मासात् षड्गुणैः सिद्धो [illegible] रसे ॥ ३५ ॥

तस्मादोषधिभिवाशु चारयेज्जारयेद् रसम् ।
एकतो योगतश्चापि द्विविधं चारणोच्यते ॥ ३६ ॥

कुलिका विष्णुपर्णी च कल्याणी जलभागिनी ।
सूर्यावर्ताजमारी च विचित्रा सेतुबन्धिनी ॥ ३७ ॥

वज्रिणी पीलुपत्री च गन्धिका वनभूस्तृणा ।
मेघमुष्काखुमुष्का च शुका गोवन्दना शुचिः ॥ ३८ ॥

तिन्त्रिणीबीजपूराम्लैः सिन्धुतालसुटङ्कणैः ।
प्लावितं पाचयेदभ्रं प्रतिवाप्य बलीवसम् ॥ ३९ ॥

तद्घनं सूतकरसस्तोकं स्तोकं प्रवेशितम् ।
निष्ठीव्य सुजलामूलं जलूकावद्भवेद् रसः ॥ ४० ॥

स्वेदनाज्जारयेद् रात्रावाशु गृह्णाति चारितम् ।
हिङ्गुमाक्षिकसंयुक्तो द्विमासेऽग्निसहो रसः ॥ ४१ ॥

तद्रसार्धं द्विधाकृत्य तारहेमक्रियाविधौ ।
दीपं सञ्चाल्य बहुशः समं द्विगुणषड्गुणम् ॥ ४२ ॥

बीजं सञ्चार्य विधिवद् द्रावये(द्) द्रावणाविधौ ।
गोलकं वा यथान्यायं कुर्याद् रसरहस्यवित् ॥ ४३ ॥

पलस्य माषकं विद्यात् ताम्रतारे सुशोधिते ।
शतांशं वा सहस्रांशं हेमं तारं प्रबोधयेत् ॥ ४४ ॥

विषघ्नीनामविख्यातादोषघ्नी शीतसंश्रिता ।
कदम्बपत्रसदृशैः पत्रैः पुष्पैः कुसुम्भवत् ॥ ४५ ॥

पुष्पं केसरमेव स्यात् सर्वतो रक्तकृष्णकम् ।
मूलं कार्कोटकस्यैव शिखानां तु द्विधा त्रिधा ॥ ४६ ॥

तद्वा तद् भूकदम्बाग्निवर्णं नन्दीरकाकृतिः ।
उत्तिष्ठेद्दीपदेवोर्व्यां प्रादेशं षोडशाङ्गुलम् ॥ ४७ ॥

तां गृहीत्वा सपत्रं तु मातुलुङ्गाम्लभावितम् ।
लेपयित्वाभ्रपत्राणि दत्त्वाग्नौ प्रक्षिपेद् रसं ॥ ४८ ॥

निष्पीड्य तद् रसं वस्त्रे अङ्गुष्ठेन तु मर्दयेत् ।
मर्दितं लोहमुष्ट्या तु चारयेन्मृदुनोष्मणा ॥ ४९ ॥

जलूकावद् भवेदाशु खण्डशो वा क्रमेण तु ।
षोडशांशं चरेत् पूर्वम् अनुवृद्ध्याष्टमं भवेत् ॥ ५० ॥

तत्कल्कमारनालेन लोलितं मधुनाथवा ।
बन्धितं चीरया रात्रौ किट्टं हिङ्गुससैन्धवैः ॥ ५१ ॥

एवं संस्वेदितं भूयः सूतकं घनमिश्रितम् ।
जारयेत् तत्क्षणादेव मासतोऽग्निसहो भवेत् ॥ ५२ ॥

पक्वजम्बूफलाकारं कृष्णमेवसमद्युतिः ।
गरीयान् बहलं पश्येत् खजीर्णो चेषुशीमुखान् ॥ ५३ ॥

यः कश्चित् चारयेत् पिण्डं काकविष्ठामथापि वा ।
तद् रसं सूतके क्षिप्तं मात्रया पूर्ववज्जरेत् ॥ ५४ ॥

अक्षयोऽनुचरो रक्तो वैडूर्य इव रश्मिमान् ।
निष्कम्पो निर्गतिर्दीप्तोऽभ्रजीर्णस्त्वोषधीमुखात् ॥ ५५ ॥

लोहावर्त्तं ततो दृष्ट्वा सूतकं सूर्यसन्निभम् ।
ज्येष्ठमध्यमबीजेन द्रावणं गोलकं कुरु ॥ ५६ ॥

वङ्गेनोत्क्रामते तारं नागे हेमं न संशयः ।
शतं साहस्रमेवापि एवमानुक्रमो विधिः ॥ ५७ ॥

मारणानुसरावस्थर्वाजेन द्रुतरञ्जितम् ।
वेधयित्वा क्रमाल्लोहं स्वयमेव प्रयच्छति ॥ ५८ ॥

लोहावर्तान्तरे दिव्यो वेधवेधानुवेधकः ।
अक्षयो रसधेनुः स्यात् स्पर्शधूमान्तरोऽपि वा ॥ ५९ ॥

पावकेन समं ज्वाल्य अप्रमाणागमो रसः ।
अष्टदोषविनिर्मुक्तः सिद्धोऽष्टगुणसम्पदा ॥ ६० ॥

पारतीयो रसेन्द्रोऽयं भवत्यमृतसंज्ञकः ।
नचैनमनलः शक्तो दग्धुं कालशतैरपि ॥ ६१ ॥

नचानिलः शोषयितुं नापि क्लेदयितुं क्षमः ।
न कालनियमस्तस्य परिणामाय कल्पितः ॥ ६२ ॥

आरोग्यायुष्यकृत् चासावजरत्वामरत्वकृत् ।
सर्वौषधीश्च[1] रत्नानि रसेन्द्रस्य महोदधौ ॥ ६३ ॥

देववैक्रान्तवज्राणि हेमलोहद्रवाणि च ।
प्रक्षिप्य मन्दरं मन्थं कृत्वा रज्जुं च वासुकिम् ॥ ६४ ॥

अमरत्वकरार्थाय ममन्थुर्देवदानवाः ।
प्रादुर्भूतो रसस्तस्मिन्नप्रमेयगुणो महान् ॥ ६५ ॥

बन्धितो रञ्जितो दिव्यो दीपितोऽमृतकल्पितः ।
तदर्थमभवत् तेषां बद्धवैरं महाहवम् ॥ ६६ ॥

वर्तमाने तदा तस्मिन् संग्रामे रोमहर्षणे ।
वीर्यदर्पबलोपेताः संरब्धायुधपाणयः ॥ ६७ ॥

क्रुधाभिघातिनः शूरा दंष्ट्रोष्ठभ्रुकुटीमुखाः ।
सर्वामराः समोत्क्षिप्ताः शस्त्रसम्भिन्नमूर्तयः ॥ ६८ ॥

अञ्जनाचलसङ्काशाः क्षरन्तः शोणितोदकम् ।
शोणितेन परिप्लुत्य मेदिनीं द्रव्यगोचराम् ॥ ६९ ॥

तीव्रशोणितधाराभिर्वर्षतीवाम्बुदो यथा ।
ज्याघोषशस्त्रसङ्घातकृताशनितडिद्गुणाः ॥ ७० ॥

---

१ 'धि' क. पाठः.

देवैर्दिवापथारूढैः भग्नदंष्ट्रा मनस्विनः ।
पातितास्ते महावृक्षाश्छिन्नमूला इवाचलाः ॥ ७१ ॥
अथान्ये समरव्यग्रा हतशेषाः प्रदुद्रुवुः ।
तेषां शोणितवाहिन्यः प्रादुर्भूताश्च निम्नगाः ॥ ७२ ॥
पीतफेनोर्मिमालिन्यः स्रवन्त्यो रौद्रदर्शनाः ।
ताभिरापूरितो रक्तैः लोहितोऽभून्महार्णवः ॥ ७३ ॥
एवमद्भुतसङ्ग्रामे संरम्भे वैरदीपिते ।
हत्वा दैत्यान् रसं पीत्वा बभूवुरमराः सुराः ॥ ७४ ॥
एवंकर्ता महावीर्यः सर्वव्यापी रसः प्रभुः ।
तस्योपयोगं वक्ष्यामि यथावदनुपूर्वशः ॥ ७५ ॥
येन जीवेज्जरां जित्वा मृत्युं च त्रिदशोपमः ।
आरोग्यं रसमादाय क्षेत्रीकरणकारणात् ॥ ७६ ॥
विधानेनोपयुञ्जीत शुद्धबद्धं ततः परम् ।
महावीर्या रसाः पूर्वं नोपयोज्याः कदाचन ॥ ७७ ॥
मारयन्त्यबुधं क्षिप्रं वज्राशनिविषोपमाः ।
क्षेत्रीकृतशरीरैस्तु उपयोज्या महारसाः ॥ ७८ ॥
प्राप्नुवन्ति यथावत् ते तेजोवीर्यवपुर्गुणान् ।
विषविष्ठादिवर्गेभ्यो वनात् षट्कर्मवर्जितम् ॥ ७९ ॥
तैजिष्ठं सूतकं शुद्धं कृत्वा दशपलोद्धृतम् ।
आरोग्यमुपयुञ्जीत पूर्वं मत्रकसंभृतम् ॥ ८० ॥
एष एव क्रमो वृद्धेर्यावत् स्युः पञ्च माषकाः ।
ह्रासं च माषकेनैव यावदामूलमाषकम् ॥ ८१ ॥
पुनः पुनः प्रवर्तेत ह्रासयेच्च पुनः पुनः ।
द्वन्द्वं बीजस्य मुख्यस्य सङ्करः स्वरसस्य च ॥ ८२ ॥
गुञ्जादिसूचितो मात्रा आसमाप्तेर्विधीयते ।
तीक्ष्णजीर्णरसं कृत्वा त्रिफलाकल्कयोजितम् ॥ ८३ ॥

१ 'मू' ख. पाठः.

भक्षयेन्मधुसर्पिर्भ्यां युक्तं त्रिकटुकेन च ।
क्षेत्रीकरणयोगोऽन्यो हरिद्रामधुसर्पिषा ॥ ८४ ॥

व्याधिघातगुलं चैव मेघनादरसप्लुतम् ।
सूतके नष्टपिष्टस्य द्विगुणद्रव्यसंयुते ॥ ८५ ॥

त्रिफलाव्योषतुलसीरसमित्रस्तथावरम् ।
सर्वव्याधिविनिर्मुक्तोपयुक्ते फले रसे ॥ ८६ ॥

द्वितीये शुक्रवृद्धिः स्यात् तृतीये बलवर्णता ।
चतुर्थे पलितं हन्यात् जरां जयति पञ्चमे ॥ ८७ ॥

षष्ठे श्रुतिधरो हि स्यात् सप्तमेऽक्ष्णोर्बले भवेत् ।
अष्टमे नागवीर्यं स्यात् नच स्त्रीषु क्षयं व्रजेत् ॥ ८८ ॥

नवमे सिद्धसन्दर्शी दशमे याति सिद्धताम् ।
एवं क्षेत्रीकृते देही बन्धं युञ्ज्यात् रसोत्तमम ॥ ८९ ॥

वलीपलितनिरोगाणां मृत्योश्चैव पं व्रजेत् ।
कृत्वाष्टगुणसम्पूर्णं घनचीर्णं रसोत्तमम ॥ ९० ॥

प्राश्य पञ्चपलान्यस्य न कालस्य वशं व्रजेत् ।
तीक्ष्णेनाष्टगुणस्यापि तदर्धं भक्षयेद् बुधः ॥ ९१ ॥

स्निग्धजीमूतसंकाशभ्रमरोपममूर्धजः ।
हेमकृत्तारकर्ता वा शतवर्षाग्रसोपमः ॥ ९२ ॥

तस्य गुञ्जान्मिकामात्रा प्रमाणं स्यात् पलद्वयम् ।
त्रिफलाकल्कसम्मिश्रं व्योषकर्पूरसंयुतम ॥ ९३ ॥

क्रामणैश्चारणं कृत्वा भक्षयेन्मधुसर्पिषा ।
त्रिगुणौषधिसम्भारम उपयुञ्ज्याद् यथाक्रमम् ॥ ९४ ॥

पञ्चवर्षसहस्राणि स जीवेन्निरुपद्रवः ।
यत्तु पञ्चशतं विद्यात् गुञ्जार्धं तस्य भक्षयेत् ॥ ९५ ॥

प्रमाणं पञ्चपलं विद्यात् तस्य कर्षाधिकं पलम ।
शतवर्षसहस्राणि स जीवेत् त्रिदशोपमः ॥ ९६ ॥

सर्वेन्द्रियोपभोगैश्च विविधं सुखमेधते ।
सहस्रवेधिनं मुख्यमुपयुञ्ज्याद् रसोत्तमम् ॥ ९७ ॥

गुञ्जार्धार्धप्रमाणेन यावदापूर्यते फलम् ।
उपयुक्ते रसे तस्मिन् स जीवेद् ब्रह्मणो दिनम् ॥ ९८ ॥

जित्वा मृत्युं जरां व्याधिं हित्वा वयसि षोडशे ।
मत्तनागसहस्रस्य बलं धारयते सदा ॥ ९९ ॥

क्रमेणाप्रतिमो लोके रौप्यकाञ्चनसप्रभम् ।
सुगन्धि शुक्लसुस्निग्धं जाम्बूनदसमप्रभम् ॥ १०० ॥

देवविद्याधरस्त्रीणां सहस्रमवगाहते ।
अवध्यः सर्वभूतानां सर्वथा न व्यथो भवेत् ॥ १०१ ॥

जलमध्ये चरेद् भूमौ यथा भौमानि पश्यति ।
आसुराणां च यन्त्राणामप्रधृष्यः स्वतेजसा ॥ १०२ ॥

साहस्रे परिसङ्ख्याते शतसाहस्रिकं परम् ।
शतयोजनसाहस्रं कृत्वा योजनवत् सुखी ॥ १०३ ॥

घनलोहद्रवैर्युक्तो वज्रवैक्रान्तबन्धितः ।
देवलोहैः सुबद्धो हि सुबद्धो वा महौषधैः ॥ १०४ ॥

सर्वसङ्क्रमसुत्तीर्णः शतसाहस्रिको भवेत् ।
रञ्जितो मणिभिर्दीप्तस्तस्य कर्षो विधीयते ॥ १०५ ॥

सर्षपो विहितो भक्ष्यः स भवेदजरामरः ।
शतयोजनसाहस्रमुत्पतेदविशङ्कितः ॥ १०६ ॥

देवैः सम्भाष्यतां याति विद्युज्ज्वलनसप्रभः ।
नच शस्त्रं क्रमेद् देहे नाग्निर्दहति न क्षुधा ॥ १०७ ॥

विद्याधराणामधिपो जीवेदाचन्द्रतारकम् ।
रसविद्धो मनोगामी रसं क्रामति देहवान् ॥ १०८ ॥

स्पर्शनिष्ठीवनाल्लोहात् शुभं हेम करोति सः ।
यद्वर्णं पारतीयस्य लोहतेजोभिरञ्जितम् ॥ १०९ ॥

तद्वर्णं तु वपुः कुर्यात् ज्वलते दीप्ततेजसा ।
कीटबद्धा रसाः केचित् क्षणबद्धा महौषधैः ॥ ११० ॥

---

१. 'क्षी' क. पाठः.

धातुभिश्च महावीर्यैर्दुष्टैरपि च धातुभिः ।
बद्ध्वा बन्धनबद्धैश्च नोपयोज्याः कदाचन ॥ १११ ॥
छर्दयः कीटबद्धैः स्यात् नानारोगप्रकोपता ।
क्षणिकैर्मूलिभिर्बद्धो नश्यते देहदूषणः ॥ ११२ ॥
वीर्यबद्धास्तु संबद्धैः रसः क्लेदं हि गच्छति ।
वङ्गनागनिबद्धाश्च कुष्ठं दुष्टैश्च धातुभिः ॥ ११३ ॥
बीजबद्धप्रयुक्तैश्च दूष्यन्ते देहधातवः ।
राजयक्ष्माश्चारिशांसि तैलबद्धैर्विनिर्दिशेत् ॥ ११४ ॥
अपुंस्त्वं काचबद्धैः स्यात् पाण्डुश्चोपरसादिभिः ।
विषबद्धो रसस्तीक्ष्णः सद्यः प्राणहरो भवेत् ॥ ११५ ॥
अशुभो योनिसंबद्धो वसाभिस्थापितश्च सः ।
पैशाचं जन्म तेनास्य राक्षसं वा विनिर्दिशेत् ॥ ११६ ॥
अतःपरं प्रवक्ष्यामि जीर्णाजीर्णस्य लक्षणम् ।
जीर्यमाणो रसः कुर्यात् व्यामोहं सन्धिभेदनम् ॥ ११७ ॥
कफस्योज्जननं मूर्छा आलस्यं भ्रममेव च ।
रसस्य जीर्यमाणस्य रूपाण्येतानि लक्षयेत् ॥ ११८ ॥
अजीर्णे लक्षणं तस्य वक्ष्यमाणं निबोधत ।
भृशमाध्मायते कुक्षिः वायुश्चोर्ध्वं प्रपद्यते ॥ ११९ ॥
सस्वेदो गात्रभेदश्च जायते चाप्यरोचकम् ।
बाधिर्यं मुखदोषश्च चक्षुषोर्हानिरेव च ॥ १२० ॥
दशनव्याधयश्चैव अधस्तादाशयं व्रजेत् ।
तीव्रं सञ्जायते शूलमाशु प्राणहरो भवेत् ॥ १२१ ॥
स्रावणं तस्य वक्ष्यामि येन सम्पद्यते सुखम् ।
माक्षिकं स्वर्चिकाकारं कारवल्या रसप्लुतम् ॥ १२२ ॥
गोमूत्रसिन्धुसंयुक्तं तस्य संस्रावणं भवेत् ।
पुरीषमिश्रं पतति क्षणभेदी न संशयः ॥ १२३ ॥

महाकोशातकीबीजैः बीजं पालाशमेव च ।
कारयेत् कार्षिकोभागौ पूर्वद्रव्यविमिश्रितौ ॥ १२४ ॥

प्रत्येकं भिद्यते ताभ्यां वज्रेणेव महीधरः ।
पिच्छोलामुष्ककस्यैव रसं च त्रिवृता सह ॥ १२५ ॥

एवमेषां रसैः पिष्टः सशब्दं निश्चरेद् रसः ।
शरासनविनिर्मुक्तो वेगतः सायको यथा ॥ १२६ ॥

लोहेषु क्रामणं दिव्यं न देहे क्रामणं भवेत् ।
क्रामितो दोषकर्ता स्याद् विपाके धातुषु त्रिषु ॥ १२७ ॥

दिवसस्याष्टमे भागे व्यतीतेऽप्यधिकेऽपि वा ।
पयसा कनकं घृष्टं तस्य कर्म प्रयोजयेत् ॥ १२८ ॥

यथायोगं बलं यस्य तस्यान्ते रसमश्नुते ।
अविरुद्धप्रयोगेण सर्वथा फलमश्नुते ॥ १२९ ॥

उपयुक्ते रसे पश्चात् क्रामणं भक्षयेद् बुधः ।
माक्षिकं मधुसंयुक्तं किञ्चिद्व्योपसमन्वितम् ॥ १३० ॥

जीर्णे भुञ्जीत पयसा घृतशीतेन भोजनम् ।
शालीनां षाष्ठिकानां वा पुराणानां सुसंस्कृतम् ॥ १३१ ॥

भुक्त्वा शतपदं गत्वा वामदक्षिणपक्षयोः ।
मुहूर्तं शयितं चैनं सुप्रतिष्ठितभोजनम् ॥ १३२ ॥

विनोदनार्थमुत्थाप्य प्रसन्नं श्रावयेद् बुधः ।
सृष्टिप्रवृत्तिसंहारं धर्ममोक्षकृतः कथाः ॥ १३३ ॥

नचास्य मानसं किञ्चिद् व्याघातमुपकल्पयेत् ।
एवं कुर्याद् यथायोगं आसमासेरयं विधिः ॥ १३४ ॥

शीतवातातपत्राणं कृत्वा गुप्तमथोत्तमम् ।
बहिः प्राकारसंछन्ने भूमौ गर्भगृहेषु वा ॥ १३५ ॥

गम्भीरं पूतिगर्तं च सापिधानं समाहितम् ।
प्रसन्नं च जलस्थानमधस्थं सन्निवेशयेत् ॥ १३६ ॥

१. 'बलम' क. पाठः.

प्रयोगकालद्विगुणं परिहारं विधीयते ।
वातातपौ च शीतोष्णौ भावयेच्च शनैः शनैः ॥ १३७ ॥

इति रसमुपयुज्य वज्रकायः सुचिरवपुस्सुचिरायुरुत्तमौजाः ।
प्रभवति रमते स भोगभूमौ नभसि पयोधरदुर्गमे विनिर्णिः ॥ १३८ ॥

नवविकचसुगन्धिचित्रमाल्यो वरहरिचन्दनचर्चिताङ्गयष्टिः ।
विरचितमृदुदिव्यचित्रवासाः स्फुरदरुणाभरणप्रभावभासी ॥ १३९ ॥

ज्वलदनलतटित्सुवर्णवर्णो मणिमकुटद्युतिदीपितोत्तमाङ्गः ।
स दशशतसहस्रकोटिवेधी सुरवनितामुखजासवावमोदी ॥ १४० ॥

अनुदिनमनुभूय कामभोगान् अमरतरुष्वमराः सुराङ्गनाभिः ।
स च दिवमभिगम्य हर्म्यकूटानुदयगिरेरिव भास्करः प्रभाति ॥ १४१ ॥

युवतिभिरथ सर्वसुन्दरीभिः स्फुरदुरुरत्नविभूषणप्रभाभिः ।
अनवरतरतिर्निषेव्यतेऽसौ बलिमभिगम्य यथाप्सरोभिरिन्द्रः ॥ १४२ ॥

जलधरसुरलोहवज्रबन्धो निशितमहौपधिकृन्तबन्धितो वा ।
क्रमति तरुणमहारसानुविद्धो मणिकटकद्रवरञ्जितो रसेन्द्रः ॥ १४३ ॥

परिणतगुणसम्पदातिवेधी तरुणदिवाकरभास्वरस्तपस्वी ।
विषविषधररुष्टधातुकीटः क्षणिकसुखोपरसानुबद्धवज्री ॥ १४४ ॥

धृतिमतिमत्यमृत्युपाययुक्ते सविदुषि तिष्ठति यावदेव तावत् ।
दिशि दिशि दिवि भूतलेऽतले वा सुखमनुभूय विमुच्यतेऽन्तकाले ॥

पलशतमकरोदर्धयामास्तथैव क्वथितजलशताग्रौ चाष्टभागावशिष्टः ।
सितघृतमधुभाव्यं माषचूर्णं दशांशं दशपलरसभागा लोहचूर्णं तथैव ॥

गिरिजतुसममभ्रं शत्रवो ये प्रवीणाः सघृतविधिनिकल्पैश्चैतदिष्टं प्रदिष्टम् ।
प्रतिदिनमिहाभियोजितो यथा वा कनकपलसमानं स्विन्नयोगाः क्रमेण ॥

अशनशयनयानैः विश्रमध्यानसेवी कुलिशकठिनगात्रो दीप्ततेजोऽर्कतुल्यः ।
विचरति मददर्पान्मारुतस्पर्धवेगो युवतिनयनलोलस्तुल्यगन्धोऽभिमानी ॥

अपलितदर्शतायुः शब्दब्रह्मा विमुक्तो परगुणशतवन्द्यैर्वन्दनीयः प्रजानाम् ।

---

१. 'बोधी।' ख. पाठः, २. 'नु', ३. 'षसरुपधा', ४. 'स्नु', ५. 'मतिमृत्यु', ६. 'क्तः' क. पाठः. ७. 'वत् क' ख. पाठः. ८. 'शशता' क. पाठः.

व्योमचीर्णसुतीक्ष्णे द्वे तथैवं योजयेद् बुधः ।
गुरुर्वेश्यासहस्रं च शतार्धं च यवानकम् ॥ १४९ ॥

पञ्चमूली[1] गिरी[2] बिल्वगान्धारी मदयन्तिका ।
तीव्राणि सर्ववर्गाणि भल्लातकघृतान्वितम् ॥ १५० ॥

चतुःप्रस्थं हरिद्रे द्वे पिप्पलिद्वयमूलकौ ।
समूलीदलशापं च चित्रकौ द्वे च पिप्पली ॥ १५१ ॥

आत्मगुप्तमपामार्गं सप्तानां पलसप्तकम् ।
एवं भवति द्वित्रीणि दशसप्ताभ्रकं पचेत् ॥ १५२ ॥

लोहपात्रे[3] समालोड्य संपूर्यैव सुरक्षितम् ।
यवानां मृदुपक्वं तु न सकृन्नावतारयेत् ॥ १५३ ॥

निस्राव्य स्वसितिकाथे पुराणस्य गुलस्य तु ।
दत्वा पलशतं सम्यक् परिपूर्य द्रवीकृतम् ॥ १५४ ॥

घृतस्य तु पुराणस्य तैलस्याभिनवस्य तु ।
प्रस्थं प्रस्थमवाप्यैवं पचेन्मृद्वग्निना ततः ॥ १५५ ॥

यावद् घृतावशेषं स्याद् गुलस्यातिस्थिरन्नपि ।
अवतार्य मधुप्रस्थो द्वावस्येह निशीतले ॥ १५६ ॥

स्थाप्येह पिप्पलीनां च चूर्णयित्वा चतुष्फलम् ।
मासं पर्युषितं प्राश्यादक्षमात्रं दिने दिने ॥ १५७ ॥

नाष्टभागेन निष्क्रान्ते यावत्परिसमाप्यते ।
इष्टाहारविहारः स्यादपथ्येन विना बुधः ॥ १५८ ॥

धर्ममेव प्रकुर्वीत नाधर्मं किञ्चिदाचरेत् ।
एतत् पथ्यागुलं नाम रसायनमनुत्तमम् ॥ १५९ ॥

आयुर्बलकरं वर्णं वयस्वी चातिवर्तते ।
स्त्रीष्वप्यक्षयमारोग्यं पुनर्दर्शनसम्भवम् ॥ १६० ॥

---

१. 'त्रिगिरिबि', २. 'ली' ख. पाठः ३. 'त्रैः' क. पाठः.

सुप्रसन्नेन्द्रियत्वं च कुर्यान्मृत्युजरापहम् ।
एतेन रसमश्नीयान्नष्टपिष्टं विचक्षणः ॥ १६१ ॥
अवध्यमथ वध्यं च जीवेदमरवच्चिरम् ।
विना पथ्यासहस्रेण शेषं निष्क्वाथ्य तज्जले ॥ १६२ ॥
तत्सहस्रं पुनर्दत्वा वापयेत्सर्वविद्गुलम् ।
द्वे द्वे प्राश्य हरीतक्ये कल्कमिश्रे दिने दिने ॥ १६३ ॥
रसेन्द्रेण विना पूर्वं सहस्रं परिवर्तयेत् ।
ततस्तस्य रसेन्द्रस्य पेषयित्वा दिने दिने ॥ १६४ ॥
द्वे गुञ्जे तु हरीतक्या वमया प्रत्यहं पुनः ।
एवं सहस्रमादद्यादेतत् क्षेत्रीकृतं पुनः ॥ १६५ ॥
अभ्रबन्धं रसं युज्याद् गुञ्जा स्यात्समधारिणी ।
हरीतक्याः पुटे चैव सहस्रं परिवर्तयेत् ॥ १६६ ॥
समबीजाभ्रतीक्ष्णेन सहस्रं तद्वदाचरेत् ।
सममभ्रकजीर्णस्य द्विजलोहाद् रसस्य च ॥ १६७ ॥
बीजपादद्रुतस्यास्य तद्वत् सम्भक्षयेत् पुनः ।
एवं पञ्चसहस्राणि पुनः पञ्चशतानि वा ॥ १६८ ॥
जीवेद् देवसमो भूत्वा दीप्ताग्निसमतेजसा ।
जवेन वायुसदृशो वराहः श्रवणेन च ॥ १६९ ॥
केकारवश्च स्वरतः सौपर्णो दृष्टिसम्पदा ।
मेधावी निपुणः श्रीमान् कृष्णकुण्डलमूर्धजः ॥ १७० ॥
योषितां चण्डवेगानां शतसङ्गहतत्परः ।
तत्सङ्गाद्वनिताश्चापि तत्समाश्चिरजीविताः ॥ १७१ ॥
एवमेतैर्गुणैर्युक्तश्चिरं जीवति भूतले ।
रक्षेच्छस्त्रविषाभ्यां च ये चान्ये चापमृत्यवः ॥ १७२ ॥
चतुर्णामपि लोहानां द्रावणं च विशेषतः ।
पाणाटचीनदेशोत्थं कालिकं वा सुशोधितम् ॥ १७३ ॥

१. 'णः' ख. पाठः.

तीक्ष्णं पत्रीकृतं सम्यक् तप्तं तप्तं रसे क्षिपेत् ।
धान्यीभयाक्षस्वरसे सार्यक्षाररसे पुनः ॥ १७४ ॥

बदराम्ले मस्तुनि च प्लक्षक्षारपरिस्रवे ।
सप्तकृत्वः क्षिपेत् ताप्य स्वर्चिसत्वेन लेपितम् ॥ १७५ ॥

मधुना सह द्विरचूर्णं पलशतं कृत्वा प्रक्षिपेत् तीक्ष्णभाजने ।
तन्मुष्ट्यां चारयेत् सम्यग् धात्रीरसपरिप्लुतम् ॥ १७६ ॥

पादांशं कान्तचूर्णं च स्तोकं स्तोकं प्रदापयेत् ।
अयः कपालं संछाद्य स्थापयेद् भूमिसन्निधौ ॥ १७७ ॥

दिने दिने च त्रिष्कारं छदयेत् तं निरीक्षितम् ।
धात्रीरसेन सम्पूर्य एवमेव द्रवीकृतम् ॥ १७८ ॥

पक्कजम्बूफलाकारं कृष्णवर्णसमद्युतिः ।
मयूरगलकप्रख्यं सूर्यचन्द्रमणिप्रभम् ॥ १७९ ॥

तारं ताम्रनिभं दृष्ट्वा एवमेव द्रवीकृतम् ।
योजयेद् षड्गुणं सूते भवेत्कन्यारसं जनम् ॥ १८० ॥

उदितादित्यसङ्काशो विद्युज्ज्वलनसन्निभः ।
पावकेन सदा सम्यक सर्वलोहानि विध्यति ॥ १८१ ॥

सहस्रांशेन तद्विद्धं गोलकं वा घनो रसम् ।
विषयुक्त्या क्रमेलोहे हेमं भवति शोभनम् ॥ १८२ ॥

भ्रान्तोऽपि हि वल्मिग्धो व्रीहिको वलत्राम्क्षुचिः ।
गन्धधूपबलिं दत्त्वा शुक्लपक्षे शुभेऽहनि ॥ १८३ ॥

शर्करामधुसर्पिर्भ्यां लिह प्रगौरता यथा ।
भुञ्जीत पयसा स्नात्वा जीर्णान्ते षाष्टिकोदनम् ॥ १८४ ॥

निवातगृहसंवायां स्वपेद् रात्रौ जितेन्द्रियः ।
एवं पलशतं लीढ्वा भवेत् षोडशवर्षवान् ॥ १८५ ॥

जीवेद् वर्षसहस्रं तु नास्ति शस्त्रविषे भयम् ।
ताम्रद्रवं रसं लीढ्वा रविवर्णसमप्रभः ॥ १८६ ॥

---

१. 'न्यम्लभ' क. पाठः. २. 'द्वपा' ख. पाठः ३. 'ह्' ख. पाठः.

तारेण शशिवर्णैश्च भवेद् विद्युत्समप्रभः ।
द्विगुणेनायुषा जीवेद् यथा संव्योत्तरं महत् ॥ १८७ ॥
एवमुक्तेषु विधिषु तीक्ष्णेन द्रुतमुत्तमम् ।
तत्क्रमेण रसं कुर्याद् यदीच्छेच्छ्रेय आत्मनः ॥ १८८ ॥
व्याधिनां धुलिसंघुष्टमहामस्त्वन्धिसज्जने ।
कुर्वति संवृतो भूत्वा अरण्येनान्यमाश्रयेत् ॥ १८९ ॥
वाणिज्यादिकमन्यद्वा द्रव्यां वा यस्य कारणम् ।
ममुपाद्य प्रभुञ्जीत त्रिवर्गं दृढविक्रमः ॥ १९० ॥
गन्धमाल्यार्चनादीनि देवताभ्यः प्रदीयताम् ।
सर्वभूतबलिं दत्त्वा रक्षां कृत्वा समारभेत् ॥ १९१ ॥
मन्त्रेण देवदेवस्य ग्रन्थिं कुर्यात् प्रयोगवित् ।
अग्निकार्यं ततः कृत्वा षड्गुणानां तपस्विनाम् ॥ १९२ ॥
अन्नेन चार्जनं कृत्वा ब्राह्मणानां तपस्विनाम् ।
अन्येषां वा क्षुधार्तानां दद्यादाहारवाससः ॥ १९३ ॥
दत्त्वार्थं हृष्टमनसां बान्धवानां हितैषिणाम् ।
भृत्यानां रक्षणार्थाय संवृतेनात्र भुज्यते ॥ १९४ ॥
नष्टराज्यस्तदर्हो वा प्रारब्धो दुर्गमाश्रितः ।
कुर्यात् प्रकाश्य बहुशः सङ्ग्रहार्थं जनस्य तु ॥ १९५ ॥
राज्यार्थं राजपुत्राणां धर्मार्थं च तपस्विनाम् ।
वैश्यानां मैत्रभावेन रसबन्धं प्रदर्शयेत् ॥ १९६ ॥
ओषधीरर्चयित्वा तु गन्धमाल्यैरलङ्कृताः ।
सूत्रेणाम्बरमाच्छाद्य हविर्दत्त्वा घृतोचितम् ॥ १९७ ॥
धर्मार्थं रससिद्धौ तु कर्म साधुकरी भवेत् ।
एवमुक्त्वा तु मन्त्रेण परिजप्यैकविंशतिम् ॥ १९८ ॥
कृतोपवासः शुद्धात्मा पद्मसूत्रेण बन्धयेत् ।
एवं पर्युषितो रात्रौ प्रातरुत्थाय मानवः ॥ १९९ ॥

---

१. ना कुलसङ्घेषु म', २. 'गू' ख. पाठः.

कृशानौ च बलिं दत्त्वा मन्त्रेणोत्सादयेद् बुधः ।
अदृश्यरूपान्निर्गच्छेदसिद्धौ पापकर्मणः ॥ २०० ॥

एवं मङ्गलमास्थाय गृहीत्वा तां महौषधिम् ।
अर्चयित्वा रसेन्द्रं तु रक्षां कृत्वा तु बन्धयेत् ॥ २०१ ॥

मन्त्रिते सप्तगुणिते सूत्रे मुद्रां सुलोहजाम् ।
ग्रन्थितां बहुशो दत्त्वा बन्धयेद् रसभाजने ॥ २०२ ॥

कुर्यात् पूजां महेशस्य गन्धधूपादिभिः क्रमात् ।
इन्द्रस्य वरुणस्यापि कुबेरस्य यमस्य च ॥ २०३ ॥

चातुर्वर्ण्यं हविर्दत्त्वा पुष्पाणि च सवर्णता ।
भूतानामेव सर्वेषां माषमुद्गैर्गुलोदनम् ॥ २०४ ॥
लोहचूर्णं सपललं भोजयीत घृतोचितम् ।
प्रणिपत्य महादेवं सर्वलोकेश्वरं प्रभुम् ॥ २०५ ॥

अर्चयित्वा यथाशक्त्या प्रारभेत शुभेऽहनि ।
ब्रह्मचारी विशुद्धात्मा उद्युक्तो नान्यचिन्तकः ॥ २०६ ॥

स्वकर्मनिरतो भूत्वा विधिवच्च समारभेत् ।
गृहं विशुद्धं निश्चारं पुष्पालङ्कृतभूतलम् ॥ २०७ ॥

अर्चयित्वाग्निकुण्डं च घृतक्षीरगुडौदनैः ।
एवं प्रय(त)मानस्य क्षिप्रमेव तु सिध्यति ॥ २०८ ॥
विघ्नानि च विनश्येयुरन्यथा तु विपद्यते ।

ओं वीरधर! दिव्यरूप! बन्ध बन्ध हुं फट् । वज्रशृङ्खल! कटे विकटे कङ्कटे। कट विकट कङ्कटे महौषधि नमोऽस्तु ते । विच्छे उद्बन्ध स्वाहा बन्धनं नाम अंकुषाषण्डीये उद्धर उद्धर सर्वकामसाधनीये हुरु हुरु लुलु महौषधि स्वाहा । उद्धारणमन्त्रम्— ओं नमो भगवते हुताशनवर्णरुद्राय नमश्चण्ड-वज्रपाणये हुलु हुलु तिष्ठ तिष्ठ बन्ध बन्ध हर हर अमृते हुं फट् स्वाहा । रक्षामन्त्रम् —ओं नमो भगवते हुताशनवर्ण अङ्गारिणीये ज्वाले माले जाज्वले ज्वालामालाकुले स्वाहा । अग्निमन्त्रं —

व्रतशीलगुणोपेतः क्षमावान् विजितेन्द्रियः ॥ २०९ ॥

१, 'वादी वि' ख. पाठः. २, 'नखले' क. पाठः,

कृतज्ञः पुण्यभाक् शक्तः स सत्यप्रत्ययात्मकः ।
प्रशस्ते तिथिनक्षत्रे मुहूर्ते करणान्विते ॥ २१० ॥

ग्राह्यं पत्रोपकरणं यथास्थाननिवेशनैः ।
अन्येषामोषधीनां तु जठरग्राहिणीति या ॥ २११ ॥

एषैव परमा ज्ञेया तासां नामानि जातयः ।
पत्रैः पुष्पैः फलैर्नालैर्मूलैर्वर्णान्तरैः पृथक् ॥ २१२ ॥

रसेन गन्धतो बीजैः परीक्षासदृशैः परैः ।
तृणगुल्मलतावल्ली वृक्षजातिर्विसर्पिणी ॥ २१३ ॥

उत्तिष्ठन्ती त्वपिदेव रसमूल्योऽग्रवा स्मृताः ।
शोधनी ग्राहणी चैव जारणी द्रावणी तथा ॥ २१४ ॥

भेदनी रञ्जनी क्रान्ता मूली सा सप्तधा स्मृता ।
सर्वकर्मान्तरं कुर्याद् रसेन्द्रस्य महौषधीः ॥ २१५ ॥

चतुष्कं जठरग्राही शेषाश्चैकद्विकात्रिका ।
द्विमासे जठरग्राही द्वाविंशाहं महौषधिम् ॥ २१६ ॥

क्षिप्रमुद्धूलिका मूली वेधयेत्तु क्रियान्तरम् ।
शोधनं ग्राहणं चैव भेदनं चारणं भवेत् ॥ २१७ ॥

जारणं स्वेदनं चैव जठरग्राहमूलिभिः ।
भूतकेशा भवेद्वल्ली निम्बपत्रैर्विचित्रिता ॥ २१८ ॥

मूलैः कृष्णा विषहरा कृष्णमूलीति लोकतः ।
लशुनप्रायगन्धा च तत्पत्रैर्मुष्ककोपमा ॥ २१९ ॥

उदरग्राहिकाप्रस्य वल्ली नातिविसर्पिणी ।
आदित्यवल्ली विज्ञेया दक्षिणोदधिसंश्रिता ॥ २२० ॥

यस्या बीजेन मनुजा मारणान्तमवाप्नुयुः ।
षडङ्गुलप्रमाणा तु पुष्पेण चणकोपमा ॥ २२१ ॥

नालं प्रवालसदृशं पत्राग्रे तोयबिन्दवः ।
लघुर्दीर्घिकपत्राढ्या सकुञ्चितशिरोधरा ॥ २२२ ॥

---

१. 'णीः' ख. पाठः.

भवेदंशुमती नाम्ना जठरग्राहिमूलिनी ।
स्नुहिपत्रोपमैः पत्रैः बहलैर्बहुसञ्चितैः ॥ २२३ ॥
ईषदेवोर्ध्वमुत्तिष्ठदमराभ्रकचारिणी ।
वराहरूपा वाराही सक्षीरा कन्दवल्ल्यपि ॥ २२४ ॥
रोमशा पत्रबहुला घनोदरकरी रसे ।
पारिजातसमा पत्रैः + + रक्तपुष्पा लता भवेत् ॥ २२५ ॥
चरेत्किंशुकनाम्ना च घनोपरसतीक्ष्णकान् ।
अश्वत्थपत्रसदृशैर्बहुपर्वसुरक्तकैः ॥ २२६ ॥
पुष्पैर्घनोदरकरी नामतः शतपर्विका ।
अम्लपत्रोपमैः पत्रैः + + नातिविसर्पिणी ॥ २२७ ॥
आम्रातकी भवेन्नाम्ना घनोदरकरी मता ।
अशोकपत्रसदृशैः पुष्पैस्तत्सदृशैर्लता ॥ २२८ ॥
नाम्ना सारा घनग्राही तद् भवेद्दशमं विदुः ।
कराग्रवत्समैः पत्रैरग्रे शूलाग्रवद् भवेत् ॥ २२९ ॥
ईषदुत्तिष्ठते रक्तः शुल्बवेधी महारसः ।
गन्धकालेन मूल्यास्तु जातिहिङ्गुलिकेन च ॥ २३० ॥
आम्लेन पिष्टलिप्तं तु ताम्रं हाटकतत्समम् ।
तालस्य पत्रिकापत्रैर्नाम्ना साग्रे सशूलवत् ॥ २३१ ॥
ईषदेव क्रियापूर्वं सपुटेन तु पाचयेत् ।
महारसत्वात् स्फुटते ह्यन्यमन्यं प्रदापयेत् ॥ २३२ ॥
यावन्मृदुत्वमायाति वर्णतो हेमवत्समम् ।
एतद्रसं रसेन्द्रेण प्रलिम्पेद्यानि चारितम् ॥ २३३ ॥
स्पर्शेनैव तु लोहानि विद्धते रसतेजसा ।
पुन्नागसदृशैः पत्रैर्गन्धतः सुरभी भवेत् ॥ २३४ ॥
लता सा केसरी नाम निष्ठीव्यघनचारिणी ।
कर्षचीर्णं पुटसहो घनचूर्णं फले रसे ॥ २३५ ॥

१. 'शुभा', २. 'वैः' ख. पाठः, ३. 'ध' क. पाठः.

अर्धचीर्णप्रलेपोऽपि स्त्रीकर्षो मूकमूषितः ।
समचीर्णो रसस्यायं गन्धकेन तु मिश्रितम् ॥ २३६ ॥

बीजद्रुतः स्याद् द्विगुणो लोहावर्तो यथेष्टतः ।
द्वात्रिंशांशेऽभ्रको नश्येत् षोडशांशेन निश्चलम् ॥ २३७ ॥

जलूका द्वादशांशे स्यादष्टांशेन तु खण्डता ।
षष्ठांशे काकविष्ठा स्याच्चतुर्थांशेन पिण्डता ॥ २३८ ॥

एवमनुक्रमात् कुर्युर्जठरग्राहणाविधौ ।
पक्षतो मासतश्चैव ध्रुवं सिद्धी रसस्य तु ॥ २३९ ॥

लोहस्नेहगतो वापि चारणाजरणविद्वान् ।
कालान्तरक्रमेणैव सिद्धिर्भवति वा नवा ॥ २४० ॥

औषधैर्जठरग्राही पिण्डग्राही महौषधि ।
विना रसेन या विध्यात् सा दिव्यौषधिरिति स्मृता ॥ २४१ ॥

तस्मादौषधिसंज्ञाते कार्त्तिके फाल्गुनान्तिके ।
अन्तरे विमृशेद् विद्वानुक्तश्रमसहः शुचिः ॥ २४२ ॥

तीर्थे वा पर्वतेऽरण्ये नदीनां सङ्गमेषु च ।
अन्यत्र वा शुचौ देशे सामुद्रे वा तपोवने ॥ २४३ ॥

या चेष्टलक्षणोपेता तया कुर्यात् क्रियां वराम् ।
बहूनां ज्ञातमात्रे च एकापि सुलभा भवेत् ॥ २४४ ॥

ग्रामसीमान्तसंजाता यदि लब्धा महौषधिः ।
अल्पवीर्या प्रयत्नेन द्विगुणेनारभेत् क्रियाम् ॥ २४५ ॥

सर्पाकारलता वृत्ता निष्पत्रा चोद्भवा मता ।
वर्धते सर्पमात्रा सा रसपिण्डकरी घने ॥ २४६ ॥

आशु सिद्धिर्महासुख्या चतुर्थांशेन चारणे ।
तत्क्षणात् पिण्डतां प्राप्य नवनीतोपमो भवेत् ॥ २४७ ॥

ततोऽन्येऽहनि सञ्चार्य सोष्मणा सुद्रुतो भवेत् ।
चीर्णं जीर्णं दशाहेन तीक्ष्णं चार्याथ जारयेत् ॥ २४८ ॥

---

१ 'पाहत्रि', २. 'हि' ख. पाठः. ३. 'धिः स्मृ' क. पाठः.

तालकं गन्धमाक्षीकं शिलापारतजारणात् ।
चारणानुक्रमेणोष्णे द्वाविंशांशेन सिध्यति ॥ २४९ ॥
पावकस्थो भवेद्रक्तः समहेमद्रुतोऽपि वा ।
सहस्रवेधी सर्वेषु शक्रगोपसमप्रभः ॥ २५० ॥
महौषधीनामन्यासामेष एव विधिक्रमः ।
तासां नामानि चिह्नानि लक्षणं चोत्तरं वदेत् ॥ २५१ ॥
एकपत्रा सनालेन नात्युच्चच्छत्रवद् भवेत् ।
रसपिण्डं घने कुर्यात् छत्री कन्दवती शुभा ॥ २५२ ॥
नन्द्यावर्तेन सदृशा गुल्मजातिर्वनोद्भवा ।
पत्रैः पुष्पैश्च नात्युच्चा नाम्ना शबरका भवेत् ॥ २५३ ॥
पीलुकासदृशैः पत्रैरीषदेव लता मृदु ।
देवनाम्ना रसेन्द्रेण वनपिण्डकरी क्षणात् ॥ २५४ ॥
वज्रसादृश्यफलिनी पत्रैरञ्जलिसम्पुटैः ।
लता वज्री बहुमता चारणाजारणौषधिः[1] ॥ २५५ ॥
स्पर्शवेधीरसं कुर्यात् लोहोपरसचारणात् ।
द्रावणासारलोहस्य वज्रलोहस्य भेदिनी ॥ २५६ ॥
सोमा सोमोपमा वृद्धौ पत्रैः पञ्चदशोत्थितैः ।
कृष्णपक्षे तथा चाह्नामेकमेकं विशीर्यते ॥ २५७ ॥
तानि शुक्ले च कृष्णे च जायन्ति च पतन्ति च ।
कृष्णपक्षे त्वमावास्यां लता भवति केवला ॥ २५८ ॥
स्थलजा पद्मिनीपत्रैः पुष्पैर्नालैश्च केसरैः ।
गन्धा पद्मोपमा ज्ञेया गन्धं तस्या ह्यकर्णिकम् ॥ २५९ ॥
तस्याः पुष्पस्य चूर्णेन सूतं गन्धकपेषितम् ।
लेपयेत् कन्यसे मुख्ये दीप्तं स्यात् काञ्चनं शुभम् ॥ २६० ॥
तस्याः समूलपत्रं तु रसमभ्रकचारितम् ।
जारयेत् सप्तरात्रेण कुर्यान्नागं सुहाटकम् ॥ २६१ ॥

---

१. 'धीः' क. पाठः.

कृष्णीकरोति यः क्षीरं चित्रको नीलपुष्पितम् ।
रसबन्धकरो ह्याशु घनचूर्णेन पिण्डितम् ॥ २६२ ॥

पलण्डुकदलाकारैः पत्रैर्मरतकप्रभैः ।
कन्देन मुस्तकाकारा भिन्नेन रजनीसमा ॥ २६३ ॥
हिनस्ति सविषं घोरं रसबन्धं करोत्यपि ।
गृह्णीयात्तं प्रयत्नेन जानन् विषहराणि नु ॥ २६४ ॥
नाराची नाम निष्पन्ना [illegible] ।
द्विरत्निमात्रा वृत्ता तु कृष्णपुष्पी महौषधिः ॥ २६५ ॥
कालकण्ठी समसुखी पत्रैः पुष्पैश्च दुग्धिका ।
स्थलजा बन्धनी प्रोक्ता क्षिप्रं गन्धवती शुभा ॥ २६६ ॥
हरिद्रपत्रा सक्षीरा कुमारी तुल्यकन्द्रका ।
कूपाभ्यां[1] स्रवति क्षीरं रसबन्धनमूलिका ॥ २६७ ॥
कुलस्थपत्रसक्षीरा पीतवर्णकमूलिका ।
घनोपरसतीक्ष्णानि चारणा स्पर्शवेधिका ॥ २६८ ॥
तिलपत्रपुष्पसदृशी लता तिलकपत्रिका ।
चारयेदभ्रकं पिण्डं रसेन द्विगुणीकृतम् ॥ २६९ ॥
स्नुहिपत्रसमा पत्रैश्चतुर्भिः क्षीरिणी शुभम् ।
चारयेच्छेषवर्गं तु नरवन्दीति नामतः ॥ २७० ॥
एवमाद्या महौषध्यः पूर्वैरुद्दिष्टलक्षणाः ।
तासु संक्षेपतः प्रोक्ताः सुलभा दुर्लभाः पराः ॥ २७१ ॥
दिव्यौषधिस्तु द्विविधा एकमूल्यश्च दोहला ।
दोहलोद्धूलिका मूली एकमूलस्य वेधिनः ॥ २७२ ॥
ज्योतिस्तृणो ज्योतिवृक्षः ज्योतिःस्कन्दश्च ते त्रयः ।
सहस्रवेधिकस्त्रिविधस्तीक्ष्णे ताम्रे च मध्यमे ॥ २७३ ॥
तीक्ष्णे ताम्रं तथा कुर्यात् ताम्रे तारं न संशयः ।
तारे नागं यथोद्दिष्टं वङ्गे तारं विलोहितम् ॥ २७४ ॥
खद्योतोद्धूलिका मूली महावेधानुवेधिनी ।
अथोत्तरं प्रवक्ष्यामि गोमार्यास्तु क्रियाविधौ ॥ २७५ ॥

---

१. 'कुचाभ्यां' ख. पाठः

रक्तनाला त्रिवल्ली च खादिराकारपत्रिका ।
निष्पीडिता भवेत्पीता नाम्ना खदिरपत्रिका ॥ २७६ ॥

एषा ताम्रे शतं विध्यान्निर्बीजं हेमसुत्तमम् ।
रक्तावनितथैकस्था सुलभा युक्तचेतसाम् ॥ २७७ ॥

ब्रह्मदण्डो मधुतृणः पद्मदण्डो विशेषतः ।
सुवर्णदण्डसहिताश्चत्वारः स्पर्शवेधिनः ॥ २७८ ॥

ताम्बूलवल्ली तत्पत्रा रक्तक्षीरा शतांशके ।
ताम्रे विध्यात् सनिर्बीजं हाटकं रसतेजसा ॥ २७९ ॥

कदम्बपत्रसदृशा ईषदेव प्रसार्यते ।
रक्तक्षीरा शते ताम्रे विद्धते श्रीजया मता ॥ २८० ॥

तुवरीपत्रसदृशा ईषदेव विसर्पति ।
शुक्लक्षीरा तु विजया विध्याच्छुल्बप्रलेपितः ॥ २८१ ॥

त्रिकोणा कटुका चैव वल्ली चित्रकपत्रिणी ।
नागिनी सर्वलोहानि विद्धते सुलभा नृणाम् ॥ २८२ ॥

मयूरचन्द्रका पत्रा कन्दं कापोततत्समम् ।
शिखिकाण्डनिभैः पुष्पैर्नालैश्चन्दनगन्धितैः ॥ २८३ ॥

रसेन तिक्तो यन्मूलं नवनीतसुगन्धितम् ।
सुखस्पर्शेन तत्तुल्यं देवश्रीर्नाम लोकतः ॥ २८४ ॥

गृहीत्वा तु समूलात्तामायसादीनि वेधयेत् ।
वेधितं कनकं दिव्यं देवानामपि तत्प्रियम् ॥ २८५ ॥

क्षीरेण शतवृद्धोऽपि युञ्जमानो जरान्तकः ।
भवेद्वर्षसहस्रायुः षोडशे वयसि स्थितः ॥ २८६ ॥

तां गृहीत्वा स्वहस्ते तु बन्धयेत्परमौषधिम् ।
स सुखी लोकतो दृश्येत् ससिद्धस्त्रिविधैः फलैः ॥ २८७ ॥

शिग्रुणा समपत्राढ्यं गुल्ममीषत्समुच्छ्रितम् ।
भ्रमरान् जिघ्रतो हन्यात् कीटमारीति नामतः ॥ २८८ ॥

ताम्रं सन्द्राव्य बहुशो रसे तस्य निषेचयेत् ।
ततो निषिक्तमात्रेण निर्बीजं हाटकं शुभम् ॥ २८९ ॥

चतुर्भिर्दिलैः पत्रैर्[illegible]पुष्पा तु सिंहिका ।
श्वेतक्षीरा [illegible] तु सर्वरोगविनाशिनी ॥ २९० ॥

कार्पासमदृशैः पत्रैर्[illegible]पुष्पा पीतदुग्धिनी ।
पद्मरागाङ्कुरा [illegible] सर्ववेधका ॥ २९१ ॥

तुवरीपत्रसदृशैः [illegible] ।
पुष्पैः [illegible] भवेत् ॥ २९२ ॥

मूलका[illegible] [illegible]पुष्पा लता मता ।
रक्तक्षीरा शते नाम्रे विध्येद्धमलता शुभा ॥ २९३ ॥

पञ्चाङ्गुलीसमैः पत्रैस्तुम्बि[illegible]समपुष्पिणी ।
पीतक्षीरा [illegible] नाम्रं मक्षनी वेधयेद् भृशम् ॥ २९४ ॥

एरण्डपत्रसदृशी [illegible]पुष्पिणी ।
श्वेतक्षीरा शते ताम्रे रक्तक्षीरा द्रुमा मता ॥ २९५ ॥

सप्तपर्णनिभैः पत्रैः इपदेव लता भवेत् ।
सप्तपर्णी भवेद्रङ्गे सर्वदोषविनाशिनी ॥ २९६ ॥

उक्ताश्च दोहलामूल्यो दोहलीनां क्रियाविधौ ।
तीव्रबन्धेन महतीं रसानां श्रियमाप्नुयात् ॥ २९७ ॥

उद्धूलिकाविधानं तु गुद्यबन्धे प्रतिष्ठितम् ।
तस्माल्लोकप्रसिद्धाना मूलीनां करणं वदेत् ॥ २९८ ॥

गोमारी लोकविख्याता तथैव यवचार्चिका ।
पीतकोद्रवमारी च त्रिशूली भूशिरीपकः ॥ २९९ ॥

अग्निवृक्षोऽजमारी च तथा सर्षपपत्रिका ।
कुरवकी रक्तपुष्पा च वनकुस्तुम्बरी तथा ॥ ३०० ॥

एवमाद्या महौषध्यो लोकविख्यातनामकाः ।
निष्फलास्ते भवन्तीह क्रियान्तरमजानताम् ॥ ३०१ ॥

तृणद्विभागं गोमार्यास्तालमूतकटङ्कणम् ।
एकैकं हेमभागं च सैन्धवार्धं सुरक्तकम् ॥ ३०२ ॥

---

१. 'ध्या' ख. पाठः.

बदरीतिन्त्रिणीजिह्वामाजे तर्के निधापयेत् ।
एतद् द्रावणयोगेषु त्रिरात्रं स्थापिता सुरा ॥ ३०३ ॥
राजीकतैलमिश्रं तु वेष्टितं तृणमेकतः ।
हेममावेष्टय निर्धान्तं तनुपत्राणि कारयेत् ॥ ३०४ ॥
सुरायां स्थापितं तन्तुहस्ते मुद्रां तु कारयेत् ।
तृणार्धं टङ्कणं तालमर्धमर्धं ससैन्धवम् ॥ ३०५ ॥
पेषयेत् तत्सुराक्लिन्नं कटुतैलत्रिबिन्दुभिः ।
तत्पत्रं सूतकरसं मुद्रामध्ये निधापयेत् ॥ ३०६ ॥
शेषार्धं तृणमादद्यान्मुखाम्बुजजलप्लुतम् ।
आदित्यरश्मिभिस्तप्तम् अङ्गुष्ठेन तु मर्दयेत् ॥ ३०७ ॥
समहेमद्रुतरसं सुरायां लोहभाजने ।
तृणेन सहितं पाच्य स्थापयेत् काचभाजने ॥ ३०८ ॥
ताम्रं पलं समादाय तालकं तृणटङ्कणम् ।
माषकं माषकं गृह्य ईषत्काञ्चनपेषितम् ॥ ३०९ ॥
तत्कल्कं वाप्य बहुशः सुरायां तु निषेचितम् ।
एतत्ताम्रं नवांशेन कलङ्कं वेधयेद् रसम् ॥ ३१० ॥
कलङ्कं हेममुद्धृत्य तदर्धस्य विभागतः ।
एकभागं रसं तालं तृणटङ्कणमेव च ॥ ३११ ॥
तालपत्रेण संवेष्टय तृणेनावेष्टय चीरया ।
बन्धितं हेमपत्रेण वेष्टितं वेधयेद् रसम् ॥ ३१२ ॥
तच्छेषं हेम तत्काले दत्त्वा तैलेऽथ सार्षपे ।
निषिक्तं काञ्चनं दिव्यम् आकरोद्भवमुच्यते ॥ ३१३ ॥
वंशपत्रसमा पत्रैः सर्वतः करवीरवत् ।
त्रिपुष्पाणि सुरक्तानि व्रीहिजं पुष्पवद् भवेत् ॥ ३१४ ॥
अदनान्म्रियते गावो गोमारीं तां विनिर्दिशेत् ।
सप्तभेदान्तरा सा तु मुख्यैका शतवेधका ॥ ३१५ ॥
दशांशेनाष्टमांशेन अन्येनान्तरजातयः ।
या क्रिया तृणगोमायुः त्रिशूल्याश्च तथा भवेत् ॥ ३१६ ॥

एवं हेमं भवेत् तारं तारे हेमं न संशयः ।
सरसीपुष्पसङ्काशा तच्छुद्धं रसलापमा ॥ ३१७ ॥

पत्रैः शूलसमा ज्ञेया त्रिशूली सुलभा नृणाम् ।
त्रिशूलीमूलपत्रं तु ताम्रपत्राणि लेपयेत् ॥ ३१८ ॥

अन्धमूषीकृतं धान्ने तच्छुद्धं रसबंधने ।
त्रिदण्डी लोकविख्याता दक्षिणार्णवसम्भवा ॥ ३१९ ॥

त्रिदण्डेन त्रिवर्णेन सुरक्तारक्तना रसे ।
नियता या न लभते पीता सा स्पर्शमूलिका ॥ ३२० ॥

त्रिदण्डी सूतकं चैव वर्तहिङ्गुलिकं तथा ।
तिलश्लक्ष्णेन संलिम्पच्छुल्वं भवति काञ्चनम् ॥ ३२१ ॥

पूर्वकर्मकृतं शुद्धं यवचिञ्चारसेन तु ।
चारयेत् सप्तरात्रं तु घनं दत्त्वा मुहुर्मुहुः ॥ ३२२ ॥

आतपे चारितं सूतं नाशेन समसारिणा ।
सारितं पादहेमेन पुनस्तु प्रतिसारिणा ॥ ३२३ ॥

शुल्वमावर्त्य हंसाख्यारसेन तु निषेचयेत् ।
सप्तवारं निषिक्तं तदार्द्रके तु निषेचयेत् ॥ ३२४ ॥

नवभागार्धभागं च ताम्रं शीते निधापितम् ।
त्रिसीसाधिगतं शुद्धं तारमेकादशां++ ॥ ३२५ ॥

+ + + + + + + रसेन्द्रेणैकेन वेधयेत् ।
वेधितं सप्तरात्रं तु शीतस्थाने निधापयेत् ॥ ३२६ ॥

दशांशं हेम संभक्तं अगस्तिरससेचनम् ।
देवपूजानिमित्तं तु उपदिष्टं महर्षिणा ॥ ३२७ ॥

अभ्रकं सूतकरसं पञ्चकीटसमायुतम् ।
चारयेत् तत्फलाम्लेन सपञ्चाशदनुक्रमात् ॥ ३२८ ॥

आखुपर्ण्यास्तु कल्केन मूषां कृत्वा निधापितम् ।
बाह्यं पार्थिवमूषायाँमपीतं गोमयाग्निना ॥ ३२९ ॥

---

१. 'म:' ख. पाठः. २. ख. मातृकायां वेधिनीत्येतत् पदं वलयान्तरितं कृत्वा मूलिकेति लिखितं दृश्यते । ३. 'यां म' क. पाठः.

दग्ध्वा दग्ध्वा सपञ्चाशदुन्मत्तकफलोदरे ।
स्थापितं लवणं लिप्त्वा शङ्खपुष्पीरसे क्षिपेत् ॥ ३३० ॥
पञ्चविंशतिवारं तु पाचितं लेपितं मृदा ।
पुनः सुवर्णमूषायां कुलीरं गोतृणाम्बुना ॥ ३३१ ॥
हरितालं रक्तसिन्धूत्थं टङ्कणं चाम्लमर्दितम् ।
कृत्वा तु वापितं तारे शतांशेन तु वेधयेत् ॥ ३३२ ॥
वेधितं वेधमात्रेण हेमं भवति शोभनम् ।
एवं च गन्धकं तालं पलषट्क समन्वितम् ॥ ३३३ ॥
भागं च हेमसञ्जीर्णं स्थापितं चान्धमूषितम् ।
गन्धटङ्कणचूर्णाभ्यां बहिरावेष्टयेत् तयोः ॥ ३३४ ॥
एवं बहिर्मृदा लिप्त्वा दहेद्धचेष्टौ च विंशतिः ।
एतद्रसं नवांशेन तारेणैकेन वेधयेत् ॥ ३३५ ॥
रसभागैकहेमेन युक्तं कल्याणमुत्तमम् ।
यत्तत्कनीयसं नाम शुद्धं तारं तु मध्यमम् ॥ ३३६ ॥
हेमं ज्येष्ठं तयोर्मध्यं तस्माच्छुल्बे क्रिया परम् ।
रक्तत्वं श्यामता कार्ष्ण्यं त्रयो दोषाः समुत्थिताः ॥ ३३७
तेषां नाशे भवेत् तारं हेमं वा समाश्रितम् ।
दुष्करं रसबन्धं स्याद् भवेत् कालक्रमेण वा ॥ ३३८ ॥
तस्मान्मूलीरसं श्रेष्ठो विना मूल्या नहि क्रिया ।
तस्मादाशुकरीं वक्ष्ये क्रियां शुल्वस्य शोधनीम् ॥ ३३९ ।
रञ्जनीं चापि विधिवन्मूलीनां रसतेजसा ।
शङ्खशुक्तिरसः कूर्पः कपोताञ्जनसैन्धवम् ॥ ३४० ॥
स्नुह्यर्कक्षीरसंपिष्टं तच्छुल्वे बहुशः पचेत् ।
विदारी कन्दलीतोये माहिषाम्ले स्नुहीरसे ॥ ३४१ ॥
निषिञ्चेच्छुद्धतां याति दशाष्टक्षयसंस्थितम् ।
हरितालं घनाभासं वापयित्वा पुनः पुनः ॥ ३४२ ॥

---

१. 'प्लु' क. पाठः.

पलस्य मापकं सार्द्रं निषिञ्चेत् सूरणे न्यसेत् ।
जातिहिङ्गुलिकं वाप्य टङ्कणेन च लाक्षया ॥ ३४३ ॥

निषिञ्चेत् सप्तवारांस्तु सुपक्वे बृहतीफले ।
सौराष्ट्रिकं प्रतीवाप्य कङ्कुतैले निषेचयेत् ॥ ३४४॥

एवं वापैर्निपकैस्तु शुल्वं हेमाभ्रमुच्यते ।
रक्तमुख्यानि पुष्पाणि तक्रेणाञ्जन पेपयेत् ॥ ३४५ ॥

प्रलिप्य ताम्रपत्राणि वस्त्रेणावेष्टयेत् पुनः ।
शोषितानि मृदा लिप्त्वा त्रिःपुटं गोमयाग्निना ॥ ३४६ ॥

गालितं कदलीक्षारं हयमूत्रपरिस्रुतम् ।
पाचयित्वा क्षिपेत् तत्र सामुद्रं कतकीफलम् ॥ ३४७ ॥

ताम्रपत्राणि धान्तव्यं तस्मिन्धुर्धुरि कारयेत् ।
एकविंशतिवाराणि तप्तं तप्तं पुनः पुनः ॥ ३४८ ॥

नवांशे वेधितं ताम्रं सुतप्तं रजतं त्रिकम् ।
हेमैकयुक्तं कल्याणं शीतस्थाने निधापयेत् ॥ ३४९ ॥

पीतकोद्रवमारिं च गन्धं सूतकतत्समम् ।
चारयेत्तं फलाम्लेन ताम्रपत्राणि लेपयेत् ॥ ३५० ॥

अन्धमूषागतं धान्तं मयूरग्रीवसन्निभम् ।
हेमेन सह संयुक्तं प्रशस्तं काञ्चनं भवेत् ॥ ३५१ ॥

ज्योतिस्तृणस्य मूलेन वङ्गं निर्वापितं त्रिधा ।
नवदोषविनिर्मुक्तं रजतं कुमुदप्रभम् ॥ ३५२ ॥

वङ्गस्य मलभेदं च कापोतं चाम्लपेपितम् ।
तन्मूलैस्तीक्ष्णमालिप्य धामयेत्तद् द्रुतं भवेत् ॥ ३५३ ॥

एतत् ताम्रं भवेत् सद्यो मूलजेन विलेपितम् ।
तत् ताम्रं तारमायाति कालयुक्तं समूलतः ॥ ३५४ ॥

अजाघृतसुपिष्टं तु तत्तारं हेमतां नयेत् ।
तन्मूलमुदरे क्षिप्तं षण्डतामपि नीयते ॥ ३५५ ॥

कुरवकी कीटवटुना फलाम्लरसमर्दितम् ।
जीवभूता जीवयोगे म्लेच्छा स्यात्स्वाजिताधुना ॥ ३५६ ॥

अग्निवृक्षस्य पयसा सूतकं चारयेद् बुधः ।
नागपादं पुनर्दत्त्वा चतुर्थोपरसायुतम् ॥ ३५७ ॥

गुलेन पाचितं भूयस्ताम्रपत्राणि लेपयेत् ।
अन्धमूषीकृतं धान्तं निर्बीजं हेममुत्तमम् ॥ ३५८ ॥

सूतकं खल्वपाषाणे निष्पीड्य च शिरीषकम् ।
चारयेच्छ्लक्ष्णपिष्टं तु सर्वोपरसभागिकम् ॥ ३५९ ॥

स्वेदयेत् सप्तरात्रं तु पक्षं वा मासमेव वा ।
एवं संस्वेदितं कल्कं त्रिभिः पञ्चभिरेव वा ॥ ३६० ॥

आतपे शोषितं कृष्णं ज्ञात्वा हेमं प्रदापयेत् ।
मातृका सविशेषं स्याद् अर्धार्धेन प्रयोजिनम् ॥ ३६१ ॥

वनकुस्तुबुरीगन्धं रसं च समचारितम् ।
तत्कल्के गुलिकां कृत्वा तारपत्राणि लेपयेत् ॥ ३६२ ॥

हेमांशे योजितं सद्यो मातृकासमतां नयेत् ।
दशांशेनाष्टमांशेन सुवर्णप्रतिमो भवेत् ॥ ३६३ ॥

अजमारीं समूलान्तामभ्रकेण सुपेषितम् ।
स्थापयेन्मृन्मये पात्रे द्रवते सलिलं यथा ॥ ३६४ ॥

रञ्जिकापत्रमूलं तु निष्पीड्य समपारतम् ।
गन्धकं हस्तमध्ये तु सम्मर्द्याङ्गुष्ठपर्वणा ॥ ३६५ ॥

तारपत्रप्रलेपेन सूर्यरश्मिप्रतापितम् ।
हेमेन युक्तमात्रेण मातृका तत्क्षणापहा ॥ ३६६ ॥

स्त्रीणां च गर्भपतनचातुर्मास्यत्रिमासिकम् ।
स्थापयेदभ्रसहितं मासं वा पक्षमेव वा ॥ ३६७ ॥

तत् सूतकेन संयोज्य चारयीत फलाम्बुना ।
चीर्णोदरं सहेमाभं गन्धकेन प्रजारयेत् ॥ ३६८ ॥

---

१. 'प', २. 'राजिका' ख. पाठः.

तत्तारं लेपितं स्थाप्य हेम्नैव प्रबोधितम् ।
अन्धमूषीकृतं धान्ये तुल्यवर्णं विराजते ॥ ३६९ ॥
हेमाभ्रं सूतकरसं विष्णुपर्णीरसेन तु ।
चारयेन्नष्टपिष्टं तु ताम्रं शुद्धं प्रलेपयेत् ॥ ३७० ॥
तत्ताम्रं त्रिपुटं दद्यात् धान्ये पचीकृतं पुनः ।
लेपितं पुटपाकेन पाचयीत तुषाग्निना ॥ ३७१ ॥
पाचितं बहुभिर्वारैः कुट्टिता सुपत्रितम् ।
तत्ताम्रं समहेमेन संयुक्तं मातृकोत्तमा ॥ ३७२ ॥
भिक्षुमारी सगन्धस्तु ईषदुन्मत्तपुष्पिका ।
उत्तिष्ठेदीपदेवाख्या विष्णुपर्णी सुपुष्पिता ॥ ३७३ ॥
शुल्बं चूर्णीकृतं श्लक्ष्णं फलैस्तुम्बुरुवृक्षजैः ।
पेषयेद् यावदेकस्थः स्थापयेत् तैलभाजने ॥ ३७४ ॥
चातुर्मास्योषितं गृह्य दहेत् कूपेण गोमये ।
कुक्कुटाण्डनिभाकाराः पश्यन्तु गुलिकास्तथा ॥ ३७५ ॥
एताद्धि रजतं मुख्यं निस्तमं कुमुदप्रभम् ।
सूतकस्यैकभागेन तुत्थं त्रिगुणितं भवेत् ॥ ३७६ ॥
कासीसं गैरिकं सिन्धुरकैकं सर्वमेकतः ।
नादेयीरससंपिष्टं कल्कं निष्पीड्य चारितम् ॥ ३७७ ॥
संस्वेदयेदर्कफलैः सप्तवारं पुनः पुनः ।
लेपयेत् तत्फलाम्लेन ताम्रतारे सुपत्रिते ॥ ३७८ ॥
पाचितं पुटपाकेन हेमनैकेन मातृकम् ।
करवीरसमा पत्रैरग्रे शूलाग्रवद् भवेत् ॥ ३७९ ॥
ईषदुत्तिष्ठते रक्ता ह्यपवर्णा महारसा ।
गन्धतालेन मूल्या च जातिहिङ्गुलिकेन च ॥ ३८० ॥
आम्लेन पिष्टालिप्तं तु ताम्रं हाटकतत्समम् ।
तमालपत्रिकापत्रैर्निम्नमग्रे सशूलवत् ॥ ३८१ ॥
ईषदेव क्रियापूर्वं कंसपात्रपुटे पचेत् ।
महारसत्वात् स्फुटते ह्यन्यमन्यं प्रदापयेत् ॥ ३८२ ॥

यावन्मृदुत्वमायाति वर्णतो हेमतत्समम् ।
एतद् रसं रसेन्द्रेण चारयेद् लिम्पयेद् यदि ॥ ३८३ ॥

स्पर्शेनैव तु लोहानि आप्यन्ते रसतेजसा ।
रक्तकैरण्डसदृशैः पत्रैः पुष्पैर्विसार्पिणी ॥ ३८४ ॥

रसेन तिक्तकटुका वज्रनाराचिका भवेत् ।
तच्चूर्णं घनचूर्णेन स्थापयेत् तैलभाजने ॥ ३८५ ॥

आदित्यरश्मिभिर्युक्तं भवेत् सूतकबन्धनम् ।
मृदमभ्रं द्रवन्त्याश्च कुरवक्यः सशोकजे ॥ ३८६ ॥

वस्त्रेण पोट्टलं बद्ध्वा चणकाम्ले तु भावयेत् ।
एवं सुभावितं स्थाप्य निष्ठीव्य मुखपत्रिकम् ॥ ३८७ ॥

मर्दनात् स्रवते क्षिप्रं[1] रसं पारततत्समम् ।
अग्निजारुरसं गृह्य वृत्तपर्णीरसे क्षिपेत् ॥ ३८८ ॥

स्थापितं तत् त्रिरात्रं तु काक्षीकासीससैन्धवैः ।
सूतकं तीक्ष्णचूर्णं च चारयेत् सुरया सह ॥ ३८९ ॥

सुश्लक्ष्णं पिण्डतां याति यावत् तावच्च कारयेत् ।
भावितं गन्धपाषाणमग्निजारुरसेन तु ॥ ३९० ॥

प्रक्षिप्य खल्वपाषाणे संस्थाप्योपरि तद्रसम् ।
आर्द्रं द्युमणिसन्तप्तं द्रवते रसतत्समम् ॥ ३९१ ॥

हेममप्येवमेव स्याद् द्रवीभूतं रसात् समम् ।
लेपयेत् तारताम्रपु वापयेत् द्वादशांशके ॥ ३९२ ॥

ततो वेधसमं रुग्मं दत्त्वा शीते निधापितम् ।
वर्धते सप्तरात्रेण मात्रातुल्योत्तरं भवेत् ॥ ३९३ ॥

गुञ्जायाश्च समा पत्रैस्तिन्त्रिणीकफलोपमम् ।
द्रवमूली भवेन्नाम्नो यदजाभिर्न भक्ष्यते ॥ ३९४ ॥

तत्कल्कमभ्रकं श्लक्ष्णम् आमपत्रे सविस्तरम् ।
स्थापितं चातपे तप्तं द्रवते सूततत्समम् ॥ ३९५ ॥

१. 'प्रं सरं पा' क. पाठः.

श्वेतहिङ्गुरसेन्द्रेण कनकं द्रावयेद् यदि ।
मर्दितं चातपे तप्तं क्षणात् सूतकतत्समम् ॥ ३९६ ॥

विद्धानामपि सर्वेषां श्वेतहिङ्गुरनुत्तमम् ।
श्वेतहिङ्गुमतो ग्राह्यमग्निजारं समावहेत् ॥ ३९७ ॥

उभौ तौ द्रावकौ श्रेष्ठौ जारकः सर्वचारकः ।
अलाभे त्वग्निजारस्तु गडशूकं समावहेत् ॥ ३९८ ॥

घटोदरे विनिक्षिप्य माक्षिकं दरदं भवेत् ।
एभिः सम्मेलितं कल्कं वज्रीपयसि पेषितम् ॥ ३९९ ॥

तेनालिप्तं पुटे पक्वं चूर्णं भवति पङ्कजम् ।
पङ्कजेन त्रिधा पीतं तारं भवति पीतकम् ॥ ४०० ॥

हेमार्धेन तु संयुक्तं मातृकासमसुच्यते ।
सर्वकर्मक्रियायोग्यमक्षयं दोषवर्जितम् ॥ ४०१ ॥

रक्तमुख्यरसं गृह्य सूतकं चाभ्रजीर्णितम् ।
चारयेत्ताम्रचूर्णेन द्वादशांशेन चाष्टमम् ॥ ४०२ ॥

गन्धकं विमलं दत्त्वा षोडशांशं रसेन्द्रकम् ।
जारयेत्तद्रसेनैव पातितं चान्धमूषितम् ॥ ४०३ ॥

समं षड्गुणसञ्जीर्णं कृष्टिशुल्वं सुरञ्जितम् ।
बीजं सञ्चार्य विधिवत् स्थापयेत् काचभाजने ॥ ४०४ ॥

तारं हेमं च संलिप्य शीतस्थाने निधापितम् ।
धामयेदन्धमूषायां भवेन्मातृकतत्समम् ॥ ४०५ ॥

रक्तमुख्यानि पुष्पाणि तुत्थेन रसकेन वा ।
सूतकं चारयेदाम्ले अजातक्रेण मूत्रके ॥ ४०६ ॥

एवं सञ्चारितं सूतं स्वेदितं मर्दितं पुनः ।
लेपयेत्ताम्रपत्राणि वस्त्रेणावेष्ट्य बाह्यतः ॥ ४०७ ॥

शोषयित्वा मृदा लिप्तं त्रिपुटं गोमयाग्निना ।
एवं रक्तं भवेत्ताम्रं निघृष्टं कनकोपमम् ॥ ४०८ ॥

---

१. 'रक्त' ख. पाठः.

तच्छुल्ववन्धमूषायां धामितं पत्रितं पुनः ।
तत्कल्कमेव लिप्त्वा तु तापितं तापितं पुनः ॥ ४०९ ॥

गालितं कदलीभस्म नरमूत्रेण सप्तशः ।
पाचयेद् भागशेषं तु क्षिप्त्वा सामुद्रफेनकम् ॥ ४१० ॥

तापितं ताम्रपत्रं तु तस्मिन् धुर्धुरे कारयेत् ।
निस्तमो मृदुसंशुद्धं तावत्तावत्समानयेत् ॥ ४११ ॥

तत्तारेण चतुर्थांशं तारं विगतकल्मषम् ।
योजितं हेमभागं च कनकं व्यवहारिकम् ॥ ४१२ ॥

अभ्रकं हेमवर्णं तु गन्धकं विमलो हरिः ।
नेपालिहरितालं च शिलारक्तं सुराष्ट्रकम् ॥ ४१३ ॥

हेमकर्मकराण्याहुर्हेमकर्मणि योजयेत् ।
रसेन्द्रं च सुरज्येत हेमबीजे सुयोजितम् ॥ ४१४ ॥

श्वेतवर्गैश्च लोहैश्च तारबीजेन बन्धितः ।
सुकरं कुरुते तारं तापशुद्धं कनीयसम् ॥ ४१५ ॥

रञ्जितैर्नागवङ्गाख्यैस्तद्बीजैः पीतवर्गजैः ।
रञ्जयित्वा रसेन्द्राक्तं ज्येष्ठं कुर्यात् कनीयसम् ॥ ४१६ ॥

तस्मात् कनीयसं ज्येष्ठं मध्यमं वा क्रियाविधौ ।
कुरुते यः स भूपालस्त्रिवर्गफलभुग् भुवि ॥ ४१७ ॥

ज्येष्ठस्य मध्यमस्यापि वर्णतोऽन्तरमिष्यते ।
सुकरं वर्णपर्यायं नान्यदोषाः सहोत्थिताः ॥ ४१८ ॥

पूर्वमभ्रं समं चार्य्य पश्चाल्लोहैः सुरञ्जितम् ।
ज्योतीरसेन सन्द्राव्य चारयीत रसोत्तमम् ॥ ४१९ ॥

षोडशांशं सुराचीर्णं गन्धकं च सुषोडशम् ।
टङ्कणं सैन्धवं हिङ्गु द्रावणाङ्गसमन्वितम् ॥ ४२० ॥

षड्लोहनिगलैर्बद्धो घनचूर्णेन बृंहितम् ।
वापिते हेमबीजेन ज्येष्ठं कुर्यात् कनीयसम् ॥ ४२१ ॥

वङ्गजं नागजं वापि सङ्करं वा सुहाटकम् ।
द्रावितं दीपिकायां तु वंशनाड्यां करञ्जजैः ॥ ४२२ ॥

लेपितं वापितं चार्य्यं द्रवं वा कठिनं रसम्।
एवं कुर्वन् प्रयोगज्ञः प्राप्नोति महतीं श्रियम्॥ ४२३॥

मध्यमस्य क्रियां वक्ष्ये ज्येष्ठं भवति रञ्जनात्।
लोहोपरसबीजेन रसेन पटलेन च॥ ४२४॥

सुकरं गोलकरणं सारणं प्रतिसारणम्।
वेधकं रञ्जकं गुह्यं यथोक्तं परमर्षिणा॥ ४२५॥

देहिनोऽस्य मनुष्यस्य बाल्यकौमारयौवनम्।
कुर्वन् बन्धं यथेष्टं तु वादिकैर्न च हन्यते॥ ४२६॥

रसेन्द्रस्य बलं ज्ञात्वा कर्म कुर्याद् यथेष्टतः।
रसमभ्रकसर्ज्जीर्णे नागगन्धौ प्रचारयेत्॥ ४२७॥

समं षड्गुणमेवापि जारयेज्जारणौषधैः।
एवं शुल्बं च हेमं च तीक्ष्णं गन्धं च शक्तितः॥ ४२८॥

विषालुकेन मुस्ताया मूषाकल्पेन जारयेत्।
आसुरं सैन्धवं हिङ्गु विमलं चाथ मात्रया॥ ४२९॥

एवमग्निबलं ज्ञात्वा जीर्णलोहोदरो भवेत्।
रज्यते चाशु विधिवद् गन्धकामलजारितः॥ ४३०॥

मयूरगलकाभासो भवेदिन्द्रसमप्रभः।
तद्रसं समहेमेन वङ्गेन त्रिगुणेन च॥ ४३१॥

सारितं नवनागेन पुनस्तु प्रतिसारयेत्।
नागस्य त्रिगुणं ताम्रं ताम्रस्य त्रिगुणो बलः॥ ४३२॥

एतदेकीकृतं धान्तं तद्रसे प्रतिसारयेत्।
एतत्पिण्डं प्रकाशायां क्षपयेन्मन्दवह्निना॥ ४३३॥

निर्वपेत् तीक्ष्णमाक्षीकं ताम्रतारौ यदास्थितौ।
हेमाभमेतद्दलिके वर्णच्छेदे निघर्षणे॥ ४३४॥

दशांशेनैकहेमेन संयुक्तं मातृकासमम्।
द्वे पले वङ्गविमलौ द्रुते पादं तु तालकम्॥ ४३५॥

---

१. 'प' ख. पाठः.

तालात् पादं तु दरदं श्यामकेन तु चारयेत् ।
सप्तवारान् स्नुहिरसे घोषार्कदशके पले ॥ ४३६ ॥
प्रलेप्य रसविद्धं तु कल्याणमिति कीर्तितम् ।
पारतेनाभ्रबन्धेन बीजेन द्रुतसङ्करम् ॥ ४३७ ॥
रसेन्द्रस्य बलं ज्ञात्वा कर्म कुर्याद् विचक्षणः ।
काकविष्ठा सपिण्डस्थं दुष्करं रसबन्धनम् ॥ ४३८ ॥
भवेत्तत्तु प्रयत्नेन संसिद्धौ पुण्यकर्मणः ।
अभ्रपत्राणि संगृह्य तापितानि शिखारसे ॥ ४३९ ॥
कारयेद्धुर्धुरी सम्यक् सप्तवारं सुचूर्णितम् ।
अजागर्दभमूत्रे तु मूलं पौनर्नवं शिखा ॥ ४४० ॥
कल्कीभूतं नृमूत्रेण लोलयेद्यावदेकतः ।
तद्रसे चाभ्रकं श्लक्ष्णं स्थापयेन्मासमात्रतः ॥ ४४१ ॥
लवणं मात्रया दत्त्वा सन्निधाप्य तदुद्धरेत् ।
तद्रसं सूतकरसे चारयेल्लोहभाजने ॥ ४४२ ॥
तन्मुष्ट्या चाग्निमध्ये तु धूर्तविट् पिण्डतां व्रजेत् ।
तत्पिण्डमष्टमांशेन सूतकेनान्यचारितम् ॥ ४४३ ॥
जेरत् कुरवकीतोये गन्धामलसाहिङ्गुना ।
एकैकं द्रावयेन्नित्यं पादं पादं चतुष्पले ॥ ४४४ ॥
पिण्डं चतुर्गुणं जीर्णं द्वात्रिंशांशेन जीर्यति ।
तृतीये चारणे पिण्डं षोडशांशेन जीर्यति ॥ ४४५ ॥
तृतीये चारिते पिण्डमष्टमांशेन जीर्यति ।
चतुर्थे द्विगुणं दद्यात् पञ्चमे त्रिगुणं रसः ॥ ४४६ ॥
षष्ठे चतुर्गुणं दद्यादेकीभावगते रसे ।
पुनस्तु चारयेत् पिण्डं तद्रसस्य चतुर्गुणम् ॥ ४४७ ॥
एवं रसस्य वृद्धिः स्यात् पलं चाग्नौ विशेषतः ।
एतद्रहस्यमुद्दिष्टं चारणो जारणाविधिः ॥ ४४८ ॥
एवं षड्गुणसञ्जीर्णं लोहावर्तो रसो भवेत् ।
बीजं यथेष्टतो दद्यान्नागवङ्गादिहाटकम् ॥ ४४९ ॥

लोहजीर्णोदरे वापि बलवान् चीर्णगन्धतः ।
बीजेन क्रामणं याति रञ्जनं च विशेषतः ॥ ४५० ॥

नादेयी शारिबा वन्दा मलघ्नी सविषाश्वचर्चा ।
मुखाम्बुसम्भवं पिष्ट्वा क्रामणं स्याद् रसस्य तु ॥ ४५१ ॥

एतल्लेपेन वापेन सम्पुटेनान्धमूषया ।
वेधयेत् तारताम्रेषु यथेष्टं रससुत्तमम् ॥ ४५२ ॥

शोधनं भावनं चाभ्रे प्रवक्ष्यामि यथेष्टतः ।
अन्यच्च चारणं क्षिप्रं पिण्डग्राहं प्रयत्नतः ॥ ४५३ ॥

पौनर्नवस्य मूलं च दग्ध्वा भस्म चतुर्गुणम् ।
गालितं गर्दभीमूत्रे मृताभ्रं भावयेच्छतम् ॥ ४५४ ॥

शलाका च शिलाधेनुश्शलाका शृङ्गचूर्णितैः ।
नृकेशभस्मसहितं चारयीत सहौषधैः ॥ ४५५ ॥

कदम्बपुष्पत्रिशिखापुङ्खाकुरवकीरसैः ।
चारिता पिण्डतां याति सप्तगात्रादतः परम् ॥ ४५६ ॥

तत्पिण्डं सूतकस्येव नान्येन सहचारितम् ।
पूर्वोक्तविधिना कुर्वन् क्षिप्रं सिद्धिमवाप्नुयात् ॥ ४५७ ॥

समं वा द्विगुणं वापि त्रिगुणं षड्गुणं तथा ।
एवं चीर्णे तथा जीर्णे सन्धाने द्रावयेत् ततः ॥ ४५८ ॥

दीपिकायां त्रिसङ्घाते वंशनाड्यामथापि वा ।
हिङ्गुना जारुसन्तप्ते सारयेत्[1] समबीजतः ॥ ४५९ ॥

सारितं वेधयेत्ताम्रं तारे वा सङ्करेऽपि वा ।
कुर्याद्[2] रुग्मं यथान्याय द्रुतबीजस्य शक्तितः ॥ ४६० ॥

वेधकात्तत्समं हेमं दद्यादायुष्यरक्षणम् ।
धर्ममेव प्रकुर्वीत नाधर्मं किञ्चिदाचरेत् ॥ ४६१ ॥

षण्णामेव तु लोहानां श्रेष्ठो वङ्गोद्भवो रसः ।
तस्माद् वङ्गं समाश्रित्य रससिद्धिर्ध्रुवा भवेत् ॥ ४६२ ॥

---

१. 'द'. २. 'युग्मं' ख. पाठः.

ज्येष्ठस्य मध्यमस्यापि द्वयोर्योनिः पृथक् क्रिया ।
रसानां रक्तपीतानां संयोगे हेमकारकः ॥ ४६३ ॥

श्वेतानां रससंयोगात् तारं कुर्यात्कनीयसम् ।
एष एव विधिर्दृष्टो वङ्गे विमलयोजिते ॥ ४६४ ॥

रसानां पार्थिवानां तु विमलो वेधको महान् ।
द्रावको रञ्जको वापि रसनिग्रहकारकः ॥ ४६५ ॥

अभ्रको बन्धने श्रेष्ठो रञ्जने[1] च सवर्णता ।
एतत्त्रिकं तु वैक्रान्तं रसदोषं निकृन्तति ॥ ४६६ ॥

वङ्गेनोद्धूलितं चाभ्रं चारितं जारणाविधौ ।
ज्योतीरसेन संचार्य जारयेज्जारणौषधैः ॥ ४६७ ॥

एवं कुर्वन् प्रयोगज्ञो रससिद्धिमवाप्नुयात् ।
बध्यते रज्यते वाशु[2] समं षड्गुणमर्धतः ॥ ४६८ ॥

तद्रसं शुद्धहेमेन निर्वासं त्रुटिमात्रतः ।
कूर्पतुत्थाविशुद्धं तु रसे नागनिवापितम् ॥ ४६९ ॥

भवेन्मरतकप्रख्यं दशकं षड्गुणं शतम् ।
सहस्रं च यथाशक्त्या रसकेन विलेपितम् ॥ ४७० ॥

हेम्नश्च धरणं गृह्य त्रिकं विंशतिभागतः ।
अन्धमूषीकृतं धान्तं कर्षितामुखमागतम् ॥ ४७१ ॥

एवं समविनिर्धान्ते हेममन्यत् प्रदापयेत् ।
त्रिकं च पूर्वविधिना धामितं हेमतः स्थितः ॥ ४७२ ॥

एवं सहस्रपर्यायं कृतं सूतकयोजितम् ।
अग्निमध्यगतं क्षिप्रं द्रवेत्तैलं सुखोष्मणि ॥ ४७३ ॥

तद्रसं रक्तवर्गैस्तु मर्दितं विषमाम्लतः ।
लेपितं तारताम्रेषु[3] स्पर्शेनैव तु विध्यति ॥ ४७४ ॥

दशकान्तं[4] शतं कुर्याच्छतं साहस्रवेधकम् ।
सहस्रं स्पर्शवेधी स्याद्वङ्गं हाटकशक्तितः ॥ ४७५ ॥

१. 'रञ्जने' क. पाठः. २. 'चा', ३. 'तु', ४. 'का' ख. पाठः.

एतद् गुह्यं यथोद्दिष्टं दरिद्राणां सुखावहम् ।
कालेनाल्पेन यत्नेन मूल्येन वसुधाधिपाः ॥ ४७६ ॥

वङ्गं द्वियोनिस्तारस्य[1] हेमस्य च विशोधनः ।
एवं तारक्रियां कुर्यात् ताम्रं[3] श्वेतीकृतं रसे ॥ ४७७ ॥

नागहाटकमप्येवं त्रिकं चापि सुनाभतः ।
हेममेव करोत्येषः न तु नागे विशिष्यते ॥ ४७८ ॥

वङ्गबीजं प्रशंसन्ति प्राकाराट्टालगोपुरम् ।
जातरूपमयं कर्तुं नगरं ग्राममेव वा ॥ ४७९ ॥

शक्यं हि मेदिनीं कृत्स्नां सशैलवनकाननाम् ।
जातरूपमयं कर्तुं वङ्गबीजस्य शक्तितः ॥ ४८० ॥

तारमप्येवमेव स्याच्छ्वेतामलघनद्रुतम् ।
वङ्गत्रिकेन निर्वान्तं पूर्वोक्तविधिनान्वितम् ॥ ४८१ ॥

रसेन द्रावितं लिप्तं वाप्यं वा सारणक्रमात् ।
कुर्यात्कनीयसं घोरमुच्छ्रितं तारपर्वतम् ॥ ४८२ ॥

वज्रवैक्रान्तजातीनां रसानां यत्र तत्र वा ।
पातितानां क्रियां वक्ष्ये सामान्यं हेमतारयोः ॥ ४८३ ॥

दुर्गन्धा मत्स्यगन्धाश्च मृदवो द्रावणे लघु ।
भेदकाः सर्वलोहानां हन्यन्ते च सहद्रुताः ॥ ४८४ ॥

मलापहरणास्ताम्रे एते वैक्रान्तजातयः ।
स्तब्धा रूक्षा न संसृष्टा न द्रवन्ते सुधामिकाम् ॥ ४८५ ॥

नैकीभावद्रुता यान्ति पतिता वज्रजातयः ।
तयोरेकतमं गृह्यं ज्ञात्वा वर्णविपर्ययम् ॥ ४८६ ॥

श्वेतंतारमतो हेमं रसकर्मविधानतः ।
शिग्रुत्वचं शिखिशिर्फा सारितं जारितं रसम् ॥ ४८७ ॥

रसलोहं चरेदेवं स्वेद्यं मद्यं च धीमता ।
ततो हेमेन सञ्चार्य नागांशेन समीकृतम् ॥ ४८८ ॥

---

१. 'कम्' ख. पाठः. २. 'निता' क. पाठः. ३. 'म्रक्षे' ख. पाठः. ४. 'ङ्गन्त्रि', ५. 'घ', ६. 'का', ७. 'श्वतन्तारं', ८. 'खा', ९. 'घो' क. पाठः.

एवं चार्यं च जार्यं च यावदेकत्वमागतः ।
ततो बद्धं विजानीयाद् द्रुतपारतसाह्वयम् ॥ ४८९ ॥

तेन नागं शतांशं च पूर्वशुद्धं तु वेधयेत् ।
नाशुद्धे रञ्जनग्राही तस्मान्नागं सुशोधयेत् ॥ ४९० ॥

इक्षुमूलं सुशोष्यं चाप्यन्तर्धूमेन दाहयेत् ।
हस्तिमूत्रे समं कृत्वा तस्मिन्नागं निषेचयेत् ॥ ४९१ ॥

रक्तचन्दनमञ्जिष्ठां लाक्षा हिङ्गुलसैन्धवैः ।
पत्तङ्गं च शिला लाक्षा रसमेकत्र मर्दयेत् ॥ ४९२ ॥

एभिर्नागं प्रतीवाप्य ज्योतिष्मत्यां निषेचयेत् ।
एवं शुद्धं भवेद् विद्धं नागं पीतं स्वभावतः ॥ ४९३ ॥

श्रेष्ठेन समतां याति कर्म तस्य न विद्यते ।
तद्विद्धोऽपि पुनर्नागे कर्ममेतत्तु विद्यते ॥ ४९४ ॥

ताम्रमध्येन संशोध्य पूर्वशुद्धं विचक्षणः ।
रक्तवर्गसमं कृत्वा मयूराह्वसमं कृतम् ॥ ४९५ ॥

ज्योतिष्मत्याश्च तैलेन सगुलेन तु मर्दयेत् ।
क्राथयित्वा सधूमेन ताम्रपत्राणि लेपयेत् ॥ ४९६ ॥

लेपितं च त्रिवारं तु धामितं चान्धमूषया ।
रञ्जितं हेमवर्गैस्तु सुशीतमवतारयेत् ॥ ४९७ ॥

आहते स्फुटते वापि ताम्रवर्णं च जायते ।
कालिका वा भवेद्यस्माद् गन्धश्चापिच जायते ॥ ४९८ ॥

तस्य पत्राणि वै कृत्वा चूर्णं वापि विचक्षणः ।
स्थापयेन्मासमात्रं तु जलस्थाने तु बुद्धिमान् ॥ ४९९ ॥

मासादुद्धृत्य चावर्त्य माक्षिकस्य त्रिभागतः ।
राजाह्वसमसंयुक्तं तत्समांशैर्मयूरके ॥ ५०० ॥

एतदावर्तितं वाप्यमाम्लवेतसभावितम् ।
निस्तमो हेमतां याति शतांशेनैकयोजितम् ॥ ५०१ ॥

---

१. 'र्यं', २. 'र्धे' ख. पाठः. ३. 'घ', ४. 'या' क. पाठः. ५. 'पू',
६. 'शो मयूरकः' क. पाठः.

एतेनैव विधानेन तारकर्म विचक्षणः ।
वङ्गेन वेधितं तारं कुर्यात् ताम्रं तदर्थतः ॥ ५०२ ॥

क्षपितं नागसंशुद्धं रसस्य बलतेजसा ।
निस्तमो मृदुसंशुद्धं शतांशं रञ्जनं भवेत् ॥ ५०३ ॥

यस्य कस्य विषं[३] तस्य स्वरसः पतितस्य च ।
तीक्ष्णभागारसीनाया + + + + + + + + ॥ ५०४ ॥

तारभागसमायुक्तं मूकमूषीकृतं धमेत् ।
संस्थाप्य शीतले भूमौ वर्णं चैवोपलक्ष्यते ॥ ५०५ ॥

सप्ततो याति वैङ्गं च तेन तारं भविष्यति ।
अथ चेत् पीतवर्णं स्यात् शुल्वं हेमं भवेच्छुभम् ॥ ५०६ ॥

अथ चेद् रक्तवर्णं स्यात्तारं हेमं न संशयः ।
अव्यक्तवर्णको[४] वेधः सर्ववेधानुवेधकः ॥ ५०७ ॥

तद्विसूषीकृतं धान्तं वसुमध्ये सुभावितम् ।
लोहभागस्याष्टमसंस्थितं + + + + + + ॥ ५०८ ॥

तच्छुल्वं तारसंसिद्धं दशांशे हेम तत्समम् ।
विजात्यन्तरजातीनां क्रिया चाल्पस्य वेधकः ॥ ५०९ ॥

पारतं वैष्णवं चापि रञ्जयेद् रसमुत्तमम् ।
चारितं पाचितं चापि वीजान्तरविधानतः ॥ ५१० ॥

सारवान् सत्वसहितो वेधयेत्तारताम्रयोः ।
वेधितं कनकं दिव्यं रसविद्धं निकारकम् ॥ ५११ ॥

वज्रवैक्रान्तदैवानि महासाराणि न क्षयम् ।
गच्छन्ति दह्यमानानि सर्वलोहानि कृन्तति ॥ ५१२ ॥

लभते भागमासाद्य मृत्पाषाणपरीक्षकः ।
तस्मादनुक्रमाद् वक्ष्ये त्रयाणां तु क्रियाविधिम् ॥ ५१३ ॥

दुर्गन्धा रूक्षगन्धाश्च सविषा मत्स्यगन्धिनः ।
वर्णतः कृष्णरक्ताश्च वज्रवैक्रान्तजातयः ॥ ५१४ ॥

---

१. 'धान्त', २. 'वें', ३. 'पङ्क' ख. पाठः. ४. 'र्णः' क. पाठः. ५. 'लोहः', ६. 'राकरम्' ख. पाठः.

वज्रीकन्दस्नुहिरसं[1] तालं ताप्ये[2] प्रलेपयेत् ।
धापितं वज्रगुलिकं तस्मिन् धुर्धुरि कारयेत् ॥ ५१५ ॥
ततश्चूर्णीकृतं श्लक्ष्णं रसेन सह मूषया ।
प्लावितं चारनालेन धामयेत्तन्नियामकैः ॥ ५१६ ॥
सप्ताहमग्निसन्तप्तं ससूर्य इव रश्मिमान् ।
विद्धे[3]ने वङ्गनागाख्ये सहस्रं स्फुटते रसम् ॥ ५१७ ॥
एकं तदनुवेधेन ताम्रतारे सहस्रशः ।
*वेधयेत् तत्क्रमेणैव अमरेन्द्रायुधात्मकम् ॥ ५१८ ॥
अथामरेन्द्रायुधसाह्वयस्य रसस्य वक्ष्ये पतितस्य कर्म ।
सापारसे सेक्षुरसे[4] पुनर्नवे करञ्जयोर्ब्रह्म + विष्ठया + ॥ ५१९ ॥
सहमूलेन गोक्षीरं तद् गणैस्तु + सप्तधा
वज्रेण वज्रं[6] खलु कर्मयोगम् ।
अन्धमूषनिहतं तु वज्रकम् आरतालसहचक्रयोजितम् ।
सितेन मुख्येन तु वेष्टितेन करोत्यनिष्टं[7] सह मध्यमं युते ।
स एव चामीकरपादचारितः पुनस्तु तेन त्रिभिरेव कृत्वा ॥ ५२० ॥
+ + सहस्रेण करोति काञ्चनं क्षणेन पुंसां विदधीत सम्पदम् ।
सदासवज्राख्यरसैस्तु मर्दितं द्रुते तु वङ्गे स्पर्शेन तालकम् ॥ ५२१ ॥
दिनानि सप्तैव घृते निमग्ने
नरजीवितप्रभा त्रिफला मधुभ्याम् उपयुज्यमानः ।
त्रिसम्यग् किञ्चित्परमाणुमात्रं
त्रिसप्तरात्रं नियमेन खादन् ।
जीवेन्नरः कल्पमसंशयेन
मुखनिहितकुलिशममृतममृतशिखाभिमन्त्रयित्वा(?) ।
अचिरात्करोत्यमरतां यथोक्तकारी न सन्देहः ॥ ५२२ ॥

---

१. 'से', २. 'प्यं', ३. 'न्ध', ४. 'के', ५. 'ञ्ज', ६. 'ज्रं', ७. 'रि', ८. 'चारि न' ख. पाठः.

---

* इतः परं बहवः श्लोकाः सङ्कुला मातृकायां स्वरूपतो विवेक्तुमशक्या दृश्यन्ते

सगोस्तन्यसमानपदं निवेशयेत् ।
त्रिलोहगुप्तं सति चारुविग्रहो
भवेत् स पुंसां नयनादगोचरे ।
गोजाविकं माहिषकं प्रमथ्य
करोति समसिद्धिमार्थं च पिबन् (?) ॥ ५२३ ॥
ये केचित् त्रपुसीससताम्रकनकं हेमाभ्रजं माक्षिकम् ।
सीसिंस्सहस्रकोट्यंगपि विद्धति क्षयानलोपयोगात् (?) ॥
- - - - - - तस्यैव सहस्रानलवर्चसः ॥ ५२४ ॥
स्वेच्छया च मनोगामी यमिच्छेत् तत्र गच्छति ।
मूत्रैश्च सर्वलोहानि हेमस्योत्तमतां व्रजेत् ॥ ५२५ ॥
कुलस्थपत्रीरसवज्रयुक्तं मेषारुहाराविकपञ्चकेन ।
पिण्डानि बद्धं पततीह सत्त्वं त्रिधाकृतं वज्रलोहं न शीर्यते॥५२६॥
क्वचित्तथाग्निना घृष्यति नाग्निना द्रवेत् ।
श्वेताश्च पीतास्त्वथ कृष्णरक्ता
(णेन वज्रं ?) माहेश्वरं श्वेतमथापि पीतम् ।
+ वैष्णवं कृष्णमथापि याम्यं
ब्राह्मं च कौमारमथापि रक्तम् ॥ ५२७ ॥
(रसे तु ?) पूजा नलिंस्तेषु समानवर्णा
भूयोऽपि योग्यास्त्रिफलामधुभ्याम् ।
रसस्य किञ्चित्परमाणुमात्रं
त्रिसप्तरात्रं नियमेन खादन् ॥ ५२८ ॥
जीवेन्नरः कल्पमसंशयेन
सुमूषस्थन्तु सौवीरकप्लुतम् (?) ।
रसं निबध्नाति रसं हि संस्थितं
सवैष्णवस्पर्शमवाप्य वज्रम् ॥ ५२९ ॥
निबध्य सद्बाह्निगता क्षणेन
ततः स चामीकरपादचारितम् ।
गजं शतांशेन करोति काञ्चनं
सितेन बद्धं सितपादचारितम् ॥ ५३० ॥

तथैव वङ्गं कुरुते पिताह्वयम् ॥

खद्योतं चलिताककौङ्कुमजेन्द्रसोमा(?)
होराक्षि + मयूरचन्द्रकनिभा कोरण्डतत्पुष्पोज्वला (?) ।
शङ्खाहारस्फटिका च वर्णकनिभा वज्रेन्द्रवैक्रान्तकाः (?)
एते दिव्यरसाश्च वेधकगुणाः सर्वेपु + संस्मृताः ॥ ५३१ ॥

तीक्ष्णे त्वर्काभ्रकान्तस्फुटहतसु + नं कृन्तवज्रेषु सारं
कृत्वैषस्तुल्यभागान् सुरवरबलमर्कमुकी + तथान्तम् ।
शैलेन्द्रश्चारितोऽयं रससमगुणितं तुल्यभास्वानुदीप्तिः
विध्याद्विध्येत + + सुरकनकनिभं + करोति + विध्यात् ॥ ५३२ ॥

सक्षौद्रं सर्पियुक्तं त्रिफलरसयुतं लेहयेन्मात्रया च
सप्ताहं वृद्धिरेतोस्त्रिगुणितमसकृद्वज्रदेहस्सुगामी ।
तद्गोलं वाथ कृत्वा वादनविनिहितमासमात्रफलेन
सिद्धं सिद्धस्य कल्पेऽमरवच्चिरं जीवति जीवितेन्द्रोपमम्(?)॥५३३॥

सत्वं रसवरगुणं चारितं स्यात्पलेति (?)
तत्कल्कस्याथ कुर्याद्दशनरसयुतं लेपितस्याग्नितुल्या ।
गुह्यं तद्वज्रपाणित्रिगुणितनिहतं वासितं गोलकेन्द्रम्
एते तत्वस्य गुह्य सुखममृतांचिरं वज्रवद्वज्रदेहः ॥ ५३४ ॥

सजी त्रिफलासनं ततो निचुलकस्य पावकुण्डितसूतः (?) ।
त्रिगुणसमयाग्निवासी भवति शिलावज्रकल्कशो जीवेत् ॥ ५३५ ॥

वैक्रान्तको रसवरः पञ्चवर्णः प्रतापवान् ।
कृन्तते सर्वलोहानि न नश्येत स्वयं क्वचित् ॥ ५३६ ॥
एष मुख्यो महारसः अन्ये चान्तरजातयः ।
द्रवते चोष्मणा दिव्यो रसेन द्विगुणीकृतः ॥ ५३७ ॥
हेमेन सह निर्वान्तं शतसाहस्रवेधकः ।
ताम्रतारोरनागेषु विद्धमुत्तमतां व्रजेत् ॥ ५३८ ॥
श्वेतवैक्रान्तकोऽप्येव मध्यमेन नियोजितः ।
कुरुते रजतं वङ्गे ताम्रे पारसवेधनात् ॥ ५३९ ॥
तस्य वा बन्धनं दिव्यं प्रवक्ष्यामि बलाबलम् ।
वैक्रान्तकस्य षड्भागमष्टभागं तु सूतकम् ॥ ५४० ॥

सप्तमं हेमभागस्तु फलाम्लेन तु मर्दयेत् ।
तत्प्रकाशमूषायां ध्मापयेत विचक्षणः ॥ ५४१ ॥
पिण्डितो रसराजेन्द्रो घनो भवति नामतः ।
घनस्य तु भवेद् भागः सप्तभागस्तु काञ्चनम् ॥ ५४२ ॥
एकेन रसभागेन बद्धो भवति सो घनः ।
रसस्य तु भवेद् भागः सप्तभागस्तु पारतम् ॥ ५४३ ॥
एकेन घनभागेन बद्धो भवति सो घनः ।
घनस्य तु भवेद् भागः सप्तभागस्तु पारतम् ॥ ५४४ ॥
एकेन नागभागेन बद्धो भवति सो रसः ।
रसस्य तु भवेद् भागः सप्तभागस्तु काञ्चनम् ॥ ५४५ ॥
एकेनाभ्रकभागेन ध्मान्तं भवति सो घनः ।
षट्संक्रामविनिष्क्रान्तं सप्तमेनैव योजितम् ॥ ५४६ ॥
शुल्वं तारं शतांशेन विद्धं कनकमुत्तमम् ।
वैक्रान्तकस्य गुञ्जार्धं पारतं पलमेकतः ॥ ५४७ ॥
अभ्रकं द्विगुणं दद्यात् पञ्चनागं सुशोभितम् ।
एकं सुवर्णमुद्दिष्टं सर्वमर्धाकृतं घनम् ॥ ५४८ ॥
विध्याच्छुल्वं शतांशेन आरं वा हेममुत्तमम् ।
पूर्वोक्तविधिना कल्कं कुर्याच्च मतिमान्नरः ॥ ५४९ ॥
बलवान् रूपसम्पन्नो जीवेदमरवच्चिरम् ।
स्वयम्भूः स्वयमुत्पन्नो देवलोको महारसः ॥ ५५० ॥
रक्तं श्वेतं तथा पीतं हरितं कृष्णमेव वा ।
महारसोनुवेधी च पञ्चलोहनिकृन्तकाः ॥ ५५१ ॥
अक्षयो निस्तमो वेधिः प्रशस्तो मुख्यसंज्ञितः ।
रक्तः पीतस्तु हारिद्रो रञ्जने बन्धने शुभः ॥ ५५२ ॥
श्वेतं तारकरं श्रेष्ठं कृष्णो बध्नाति सूतकम् ।
कालिकासहिताश्चान्ये वर्णसङ्करयोगतः ॥ ५५३ ॥
अल्पवेधकरा दृष्टा प्रोक्ताश्चान्तरजातयः ।
शोधनं तापनं तेषां निषेकैर्वापि एव च ॥ ५५४ ॥

दोषनिर्घातनार्थाय पुटपाको विशिष्यते ।
हरितो रक्तपीतश्च हेम्ना द्विगुणसंयुतः ॥ ५५५ ॥
बध्नाति सूतकं विध्यात् सहस्रांशे शतेऽपि वा ।
वापेन वा प्रलेपेन ताम्रताराररयुक्तिषु ॥ ५५६ ॥
वेधयेद् रञ्जितं सूतं दिव्यं काञ्चनमुत्तमम् ।
श्वेतं तारेण सहितं चारयेत् समसूतकम् ॥ ५५७ ॥
विध्यात्ताम्रसहस्रे वा शतांशे तारमुत्तमम् ।
परीक्ष्य जातिं वर्णं च कालं शक्तिं च वेधयेत् ॥ ५५८ ॥
बन्धनं रञ्जनं ज्ञात्वा रसं कुर्याद् विचक्षणः ।
अतोऽन्येषां द्विजातीनां देवानां विधिरुच्यते ॥ ५५९ ॥
विद्धलेपनिषेकैश्च कालिकाहरणं शुभम् ।
सैन्धवं खुरमश्वस्य टङ्कणं गुलसिक्थकम् ॥ ५६० ॥
काचेन गुञ्जबीजानि पिष्ट्वा स्नुह्यर्कतोयतः ।
चूर्णीकृतस्तत्कल्केन अन्धमूषीकृतं द्रुतम् ॥ ५६१ ॥
निषिञ्चेदाम्लसुरया शुद्धं तद्देवमुत्तमम् ।
काञ्चुकी वज्रकन्दं च ++ सर्पाक्षिवल्लिका ॥ ५६२ ॥
शाबरी कदलीकन्दं निषेकः कालिकां हरेत् ।
विवर्णानां च देवानां कालिकामलसञ्चितम् ॥ ५६३ ॥
चूर्णीकृतं तु तच्छ्लक्ष्णं योजयेल्लोहवर्गजैः ।
वंशमायसताम्रं च मारितं रिपुवर्गतः ॥ ५६४ ॥
माक्षिकेन युतं कृत्वा पुटपाकेन पाचयेत् ।
पाचितं क्षारमूत्रैस्तु शङ्खचूर्णविमिश्रितम् ॥ ५६५ ॥
लोलितं स्नेहवर्गेण पञ्चनिर्यासससंयुतम् ।
सकल्केन समालोड्य छिद्रपात्रेण पातयेत् ॥ ५६६ ॥
इन्द्रगोपकसङ्काशं पतते विद्रुमप्रभम् ।
पतितं तु रसं गृह्य हेम्ना च सहयोजितम् ॥ ५६७ ॥
चारयेदभ्रचूर्णं तु सूतकं समबीजतः ।
द्रावयेद् द्रावणमूल्या दीपिकायां निधापयेत् ॥ ५६८ ॥

लेपनाद् वापनाद्वापि ताम्रे तारे शतांशके ।
विवर्णं मन्द्रबीजं च देवं संशोध्य यत्नतः ॥ ५६९ ॥

क्षिप्रं कुर्याच्छतांशेना+ष्टमांशेन वा ++ ।
देवैकं हेमभागैकं दशनारं सुशोधितम् ॥ ५७० ॥

ताम्रं सुशोधितं पञ्च अन्धमूषीकृतं द्रुतम् ।
+ + + + + + +न्द्रुतं पुनर्गन्धितं धमेत् ॥ ५७१ ॥

एवं चूर्णीकृतं श्लक्ष्णं सर्वसूत्रपरिप्लुतम् ।
स्वेदयेत् सप्तरात्रं तु हरिद्राक्षारसंयुतम् ॥ ५७२ ॥

त्रिमङ्गातेन यन्त्रेण पातयेल्लोहमुत्तमम् ।
पतितं निर्वहेल्लोहं चतुर्भिर्मारितैः शुभैः ॥ ५७३ ॥

कंसारवङ्गतीक्ष्णानां पावनाद् गञ्जनेन सः ।
एकभागस्थितं ज्ञात्वा रक्तो भवेद्रविसप्रभः ॥ ५७४ ॥

तदेकं दशहेम्ना च निर्धान्तं शतशो भवेत् ।
तद्रसं शुल्वसप्तांशे वेधितं हेमतां व्रजेत् ॥ ५७५ ॥

यदेतदुक्तं रक्तस्य च ++श्च शताधिके ।
क्षिपेदेकं सुवर्णस्य ज्ञात्वा शक्तिं रसस्य च ॥ ५७६ ॥

प्रक्षिप्य देवं पित्तेन लोलितं + + + + + ।
देवदालीरसं पूर्य पचेन्मृद्वग्निना + + ॥ ५७७ ॥

पक्वमेवं त+देवं शुद्धं मृदु भविष्यति ।
वङ्गवद् द्रवते क्षिप्रं ततः कर्म समारभेत् ॥ ५७८ ॥

देवदालीरसं दत्त्वा महामेदश्च बुद्धिमान् ।
मर्दयित्वा ततः क्षिप्रम् एकीभावं यदा भवेत् ॥ ५७९ ॥

पत्रलेपेन शुल्बस्य विशुद्धो रञ्जितो भवेत् ।
सप्तमेन युतं हेम्ना भवेत् काञ्चनमुत्तमम् ॥ ५८० ॥

एतच्चापि न कल्कस्य प्रलिप्तं रजतं भवेत् ।
वङ्गनागायसं शुल्बं संक्रमात्सूतयोजितम् ॥ ५८१ ॥

---

१. 'न्द', २. 'र्याद्धान्तं श' ख. पाठः. ३. 'कदेश' क. पाठः. ४. 'ञ', ५. 'द' ख. पाठः.

त्रिलया समचारी च सैन्धवं रसयोजितम् ।
तेन कल्कसमं कृत्वा मूषालेपं प्रदापयेत् ॥ ५८२ ॥

कल्केन लेपयेत् पात्रं रक्तमेव तु बुद्धिमान् ।
सर्वदोषविनिर्मुक्तं हेमं भवति चोत्तमम् ॥ ५८३ ॥

तत्सङ्क्रमेण निर्मुक्तं देवदालीरसप्लुतम् ।
कुर्यात् सर्षपमात्रेण पलमुत्कर्षयेद् बुधः ॥ ५८४ ॥

कोशातकीफलादेव चूर्णयित्वा क्षिपेद् बुधः ।
मासमेकं स्थितं तत्र पेपयेदौषधैरिमैः ॥ ५८५ ॥

बलातिबलमूलं च श्वेता च गिरिकर्णिका ।
त्रिवृद्दन्तीहटक्षारं वज्री मदनकोद्रवम् ॥ ५८६ ॥

पिण्डीबद्धं ततः कृत्वा सुधान्तं पारतं रसम् ।
इन्द्रगोपकसङ्काशं सर्वदेवैश्च पूजितम् ॥ ५८७ ॥

शिलालं सैन्धवं क्षौद्रं पारतेन समन्वितम् ।
तारपत्रप्रलेपेन निर्बीजं कनकं भवेत् ॥ ५८८ ॥

पूर्वकर्मकृतं सूतं पलं देवं रसात् समम् ।
त्रिसमा त्रिगुणैर्युक्तं यथाग्निबलदीपनम् ॥ ५८९ ॥

लिहन् भुञ्जीत पयसा जीर्णे एवौषधैः पुमान् ।
एवं कुर्वन् प्रयोगज्ञो लभते सिद्धिमुत्तमाम् ॥ ५९० ॥

जीवेद् वर्षसहस्रं तु वलीपलितवर्जितः ।
नवनागबलो भूत्वा हेमस्तम्भसमाकृतिः ॥ ५९१ ॥

श्रुतयो विविधाकारा विद्याश्च सकलाश्च ताः ।
सकृच्छ्रुत्वा तु गृह्णाति श्रुतं चापि न नश्यति ॥ ५९२ ॥

देवैश्च सह संभाषं सहवासं च गच्छति ।

त्रिलोहकान्ताभ्रकसारसङ्ख्यान् क्रमेण वृद्धिस्तु भवेच्च पञ्च ।
(पञ्चैव ? त)तुल्यभागो रसलोहमुख्यं सुचूर्णितं चान्धगतं निधान्तम् ॥

फलत्रिकान्तं त्रिगुणं च दत्त्वा मध्वाज्यकनकसुविशुद्धदेहः (?) ।
सुमाषकाद्यष्टपलेद्यवृद्धिः साधुभृतो क्षीरभृतोदनं स्यात् ॥ ५९४ ॥

क्षेत्रीकृते देहविमुक्तरागः नवपूर्वलोहीकृतसूतकेन्द्रम् ।
समांशितं तत्रिगुणैश्च युक्तं पलं त्रिकं स्यात् पलयुञ्जितस्य ॥ ५९५ ॥

ज्ञात्वाग्निदीप्तिक्रमवृद्धिहेतोः संभुज्यमानो मतिमान् जितेन्द्रियः (?)।
सुतप्तचामीकरसन्निकाशं सुदेहकान्तिस्तु भवेत्तु पुंसाम् ॥ ५९६ ॥

जवेऽश्ववन्मारुततुल्यवेगो सुनागवत् प्राणबलोपपन्नः ।
दृष्ट्या सुवर्णस्त्वरविन्दभागे जीवेत् सहस्रं वर्षाभिमुल्यम् (?)॥५९७॥

हेमेन्दुकान्ताभ्रकसारतुल्यं तत्तुल्यभागं सुरलोहशुद्धम् ।
सुचूर्णितं चान्धगतं त्रिधान्तं सुरक्षितं तद्दैवतविशेष्यवर्षम् (?)॥५९८॥

वर्षं दशाख्यं हितभोजनं स्यात् फलत्रिकाकल्करसेन्द्रयुक्तम् ।
समाषकाद्यापरपञ्चमापं सर्पिर्मधुभ्यां सहितोऽपि युज्यात् ॥ ५९९ ॥

ततोऽपि वक्ष्ये विनिवेश्य गुप्तं सषोडशं स्यात् सुचिराच्च भोगान् ।
यथेष्टचेष्टं परिहारमुक्तं सर्वेन्द्रियैः सर्वगुणैरुपेतम् ॥ ६०० ॥

कृष्णाश्च केशास्सुसुरूपदेहः समृत्यु(मत्यु?)मत्र्यामरोपमश्च ।
सुदेवलोहाभ्रकसारतुल्यं रसेन्द्रयुक्तोऽपि तथा यथावत् ॥ ६०१ ॥

सुतापशुद्धं सुरलोहमुख्यं सकालुका वर्णयुता महात्मा ।
सेते देव हेमपत्ररसे च युक्तः (?) ज्ञात्वा च वीर्यं च युते रसेन्द्रे ॥

संयुक्ते चोत्तमगुणा प्रमथ्ये देवे त्रयः
शुचितमार्गचोक्तः संयोज्य बुद्ध्या मतिमान्नरेन्द्रः ।
पयसि घृतनिषिक्तं चाम्लवेतसभावितम् ॥
चाम्ललुङ्गस्य तोयैरपि दिनसङ्ख्याटङ्कणज्योतिहाने ।
कुलिशसुकृततुल्ये पातयेल्लोहमुख्यं
देवलोहे विशुद्धे
त्रिभिरपि पलतोयैर्भावयेद् घातनाख्यम् ॥
गगनं च सुरलोहयोजितेन क्रमेण
देवलोहाधिकारः ।
स्पर्शवेधी रसवरो विषैरुपविषक्रमैः ।
युक्तो धूमो न विध्येत सोऽक्षयोऽग्निसमप्रभः ॥ ६०२ ॥

१. 'कं', २. 'फलत्रि', ३. 'तद्देवं हे' ख. पाठः.

रसोपरससन्द्रावैर्विधानं विस्तरेण तु ।
गुरुमाप्तोपदेशेन सर्वेष्वेव क्रियां वदेत् ॥ ६०४ ॥

रसोपरसवर्गैस्तु शोधयित्वा बृहत्फले ।
पाचयेत् सप्तरात्रं तु भावयेदग्निजारुणा ॥ ६०५ ॥

अम्लवेतससंयुक्तमयस्कान्तकरण्डके ।
निक्षिपेद्रक्तपीतानां मूलीनां पुष्पजे रसे ॥ ६०६ ॥

चुलिका लवणोत्क्षिप्तं विषवर्गैर्विलोलितम् ।
स्थापयेद् गोष्ठमध्ये तु एकैकं सर्वशाद्रवम् ॥ ६०७ ॥

उद्धृतं मासमात्रेण नानावर्णाः सुनिर्मलाः ।
हस्तेन न स्पृशेत्तन्तु जिघ्रन्नपि न चक्षुषा ॥ ६०८ ॥

तनुत्रचर्मणा + + शिरस्त्राणं च चर्मजम् ।
विषघ्नानं जयेन्नेत्रे नैवमुत्प्रेक्ष्य चालयेत् ॥ ६०९ ॥

तद्रसेन्द्ररसार्केण संयोज्य मतिमान्नरः ।
सर्वेषामेव लोहानां द्रावणार्थं सुशोभनम् ॥ ६१० ॥

चारितं द्रावितं बीजं रसराजेन योजयेत् ।
तैलवर्गांस्तु विविधान् प्रक्षिपेद् यावदिच्छया ॥ ६११ ॥

तत्तैलं मात्रया गृह्य लोहवर्गांस्तु धूपयेत् ।
ततो धूपितमात्रेण वेधयेद्रसशक्तितः ॥ ६१२ ॥

लोहजं मृण्मयं वापि यन्त्रं कुर्यात्तु धूपितम् ।
अधस्तात्तैलमा + प्य वर्गमासास्तथोपरि ॥ ६१३ ॥

उद्धूप्य धूमं निर्गच्छेद् दोषसन्धिविवर्जिते ।
प्राणिनां निश्चरेद्देशे भूमिजे वा गृहे दृढे ॥ ६१४ ॥

तद्विद्धं कनकं याति नात्र कार्या विचारणा ।
धूमवेधिरसोऽप्युक्तः संक्षेपाद् रसकर्मणः ॥ ६१५ ॥

एतद् गुह्यं पुरा प्रोक्तं प्रभुणा सर्वदर्शिना ॥ ६१६ ॥

इति महोदधौ रसोपनिषदि गुह्यबन्धो नाम
सप्तदशोऽध्यायः ॥

अथाष्टादशोऽध्यायः ।

सन्न्यासं विधिवद् दृष्ट्वा पूर्वंगमिनबुद्धिभिः ।
तेषां व्यक्तं समासेन यत्किञ्चिदनुभुक्तं वदेत् (?) ॥ १ ॥

रसकं गृह्य संशुध्य कण्टकालिरसे शुभे ।
गुलेन मर्दितं पश्चात् कटुतैलेन पाचयेत् ॥ २ ॥

एवं संशोध्य रसकं षट्पलं तुलया धृतम् ।
द्विपलं शुल्वचूर्णं तु बीजचूर्णरसं पलम् ॥ ३ ॥

लोहचूर्णं पले द्वे तु दरदस्य पलं तथा ।
गन्धकं कुनटी कर्षं तालकाक्षिसुवर्चलम् ॥ ४ ॥

टङ्कणं विमलं सिन्धु कर्षं कर्षं प्रदापयेत् ।
यावदेतद् भवेत् सर्वं तावत्सौवर्चलो रसः ॥ ५ ॥

फलाम्लेन तु सञ्चार्य शैलमूषे निधापयेत् ।
मातुलुङ्गाम्लपित्तैस्तु सम्पूर्णं तु सुसन्धितम् ॥ ६ ॥

षण्मासं स्थापयेद् भूमौ तदुद्धृत्य सुपूजितम् ।
तं रसं विद्युदाभासम् इन्द्रगोपकसप्रभम् ॥ ७ ॥

द्विनागं शुल्बपञ्चांशे वेधयेदेकभागतः ।
तदेकभागं संगृह्य मधूच्छिष्टेन वेष्टितम् ॥ ८ ॥

वेधयेत शते तारे निर्बीजं कनकं भवेत् ।
तद्रसं ताम्रपत्राणि लेपयित्वान्धमूषया ॥ ९ ॥

द्रावितं कनकं श्रेष्ठमेतद्धि हेममुत्तमम् ।
माक्षिकस्य पलं चैव विमलस्य पलं तथा ॥ १० ॥

त्रिफलायां पलं चैव सैन्धवं पलमावहेत् ।
सौवर्चलं वलयं विपारतं द्विपलं भवेत् ॥ ११ ॥

स्वर्चिकार्धपलोन्मिश्रं यावत्तावत्तु सूतकम् ।
ताम्रं तारं सुवर्णं च तीक्ष्णं वङ्गं भुजङ्गमम् ॥ १२ ॥

निहताद् द्रप्सुभिः सर्वैर्योजयेत रसोत्तमम् ।
अम्लपित्तप्लुतं भाण्डे स्थापितं मासमात्रया ॥ १३ ॥

एकहस्तगतं भूमौ अजलण्डाग्निनोपरि ।
तदुद्धृत्येन्द्रगोपाभं नागे पलशतं भवेत् ॥ १४ ॥
तन्नागं हेमसदृशं तारे पलशते वपेत् ।
तत्तारमष्टमांशेन हेमेन प्रतिबोधितम् ॥ १५ ॥
कल्याणं नाम कनकं प्रशस्तं रसवेधितम् ।
पञ्चभागाभ्रलोहस्य कृष्टिभागं सपञ्चकम् ॥ १६ ॥
सुवर्णस्याथ चत्वारि लोहचूर्णाष्टकं भवेत् ।
द्वादशांशं सुकं तस्य यावदेकगतं भवेत् ॥ १७ ॥
त्रिनागरदशांशेन पुटपाकेन पाचितम् ।
ससमं सूतकरसं चारयेद् दिवसं प्रति ॥ १८ ॥
मधूकपुष्पस्वरसे दशवारं सुचारितम् ।
भावयेत् तद्रसेनैव शतवारं पुनः पुनः ॥ १९ ॥
स्थापयेत् ताम्रपत्रेण सुनिगुप्तं तु शीतले ।
षण्मासमुषितो ह्येवं चूर्णबन्धस्तथा रसः ॥ २० ॥
चूर्णपारतसङ्काशः सिन्दूरसदृशप्रभः ।
शतांशे वेधयेत् तारे दशांशे हेममुत्तमम् ॥ २१ ॥
एतत्सिद्धौ घनं दिव्यं वर्णोत्कर्षणकारकः ।
निर्यासैश्च यथालाभं वाश्चलीविष्ठमभ्रकम् ॥ २२ ॥
महाखुमांससहितं माषचूर्णं सटङ्कणम् ।
कारवल्ल्या रसश्चैव शिग्रुमूलं सविल्वजम् ॥ २३ ॥
द्विमुखी गोवसातैले भल्लातकपरिप्लुतम् ।
नागोदरीरसोन्मिश्रं कृष्णजीरकशृङ्गिजैः ॥ २४ ॥
पाचितं पुटपाकेन गोमये मृदु चोत्तमम् ।
एतच्चूर्णस्य बद्धस्य सर्व एव रसस्य च ॥ २५ ॥
सर्वत्र सम्प्रदातव्यं चीर्णजीर्णो भवेद्रसः ।
शिशुमारस्य मूलेन लोकसाररसेन च ॥ २६ ॥

---

१. 'इन्दु', २. 'मिथात' ख. पाठः.

ताम्रं तारं च म्रियते गजाह्वक्षुद्रिकारसे ।
निर्गुण्डीशतपत्राभ्यां शुद्धं तीक्ष्णं निहन्यते ॥ २७ ॥

वंशाभ्रकस्तु नादेय्या ब्रह्मवृक्षस्तु हेमहा ।
एवं निर्मारिताल्लोहाद्रसैरुपरसैः सह ॥ २८ ॥

रञ्जयेन्मणिवर्गैस्तु रक्तपीतैस्तथौषधैः ।
तारेणोज्जीवयेद्धेमं ताम्रं नागेन जीवति ॥ २९ ॥

नागमभ्रकसत्त्वेन तारं वङ्गस्य जीवनम् ।
तीक्ष्णस्य बोधनं ताम्रं तारस्य कनकोऽमृतम् ॥ ३० ॥

लोलितं मधुसर्पिर्भ्यां रञ्जनात्तैलसंयुतम् ।
अन्वितं मूकमूषायां पातनेनापि पातयेत् ॥ ३१ ॥

दृढं सङ्घातयन्त्रेण रससूतकरञ्जकम् ।
नागोदरीरसं तीक्ष्णं बाष्पिका नागशोधनम् ॥ ३२ ॥

वङ्गस्य किंशुकक्षीरं विदारी शुल्वशोधनम् ।
लोहिताक्षीरसे हेमं रजतं लाङ्गलीरसे ॥ ३३ ॥

एवं संशोधिताँल्लोहान् मारितान् भावितान् विधौ ।
विषैरुपविषक्षारैः स्नेहमूत्राम्लपित्तजैः ॥ ३४ ॥

+षड्भागं कारयीत पातयेत् पातनाविधौ ।
पतितं पुनरेतेन पातयेत पुनः पुनः ॥ ३५ ॥

षड्वारान् पातिताँल्लोहान् पाचयेदाम्लमूत्रजैः ।
एतत्तारेण सहितं निर्वहेत्तारशेषितम् ॥ ३६ ॥

जालिनीपुष्पसङ्काशं यथेष्टं हेमबोधनम् ।
एतद्धेमं रसेन्द्रेण चारयित्वा क्षिपेदिमाम् ॥ ३७ ॥

काक्षिपारततालाढ्यं सैन्धवं गैरिकं खगम् ।
सुवर्णं तुत्थसहितं रक्तवर्गकषायजे ॥ ३८ ॥

मर्दितं बहुशो याति शक्रगोपसवर्णताम् ।
तीक्ष्णातिकान्तशुल्वेन हेमं निर्वाहितं दश ॥ ३९ ॥

---

१. 'गा' ख. पाठः.

तद्रसे चारितं भूय सन्न्य(स्ये)च्छैलभाजने ।
फलाम्लं च सकापित्थमाम्लवेतससम्भवम् ॥ ४० ॥
हिङ्गुमोहिनिभूनिम्बं रुदन्ती भूतकेशिनी ।
कीटवर्गेण सरसे मासं गोष्ठे निधापयेत् ॥ ४१ ॥
उद्धरेदर्चयित्वा तु देवतास्तु शुभेऽहनि ।
तद्रसं वर्णबहुलं ताम्रतारेषु वेधयेत् ॥ ४२ ॥
शतांशे वेधितं हेमं शतांशेनैव योजयेत् ।
पूर्वमभ्रकसञ्जीर्णं तारपादेन चारितम् ॥ ४३ ॥
पेषयेदौषधैरेभिर्गोश्रृङ्गे सन्निधापयेत् ।
ब्रह्मदण्डिगुलूचीं च पाठामुस्तरसूरणम् ॥ ४४ ॥
अर्जुनस्य फलं चैव निम्बपत्राणि चाशुचि ।
अनारालवणैः सार्धं मातुलाम्लरसप्लुतम् ॥ ४५ ॥
स्थापयेदग्निशालायां त्रिमासेनोद्धरेद्रसम् ।
एतद्रसफलं गृह्य षष्ठ्यंशेन कनीयसम् ॥ ४६ ॥
वङ्गनागावशीत्यंशे सिद्धं मध्यममुत्तमम् ।
पुष्पमभ्रकसञ्जीर्णं वङ्गामलसमांशिकम् ॥ ४७ ॥
सूतकं श्वनृमांसेन स्त्रियाश्च रुधिरेण च ।
गैमालिकेन शिलया समङ्गारोचनायुतम् ॥ ४८ ॥
पिष्टमाम्लेन संप्लाव्य गोश्रृङ्गे सन्निधापितम् ।
सप्तरात्रात् तदुद्धृत्य त्रिंशांशेन कनीयसम् ॥ ४९ ॥
वापितं समहेमेन दशांशेनैव कारयेत् ।
माक्षीक इति विख्यातो रसः काञ्चनसप्रभः ॥ ५० ॥
तेन बद्धं प्रवक्ष्यामि पुरा केवलभाषितम् ।
पूर्वमभ्रकसंचीर्णं मासमेकं विधानतः ॥ ५१ ॥
षड्लोहनिगलैर्बद्ध्वा न्यसेन्माक्षीकरञ्जितम् ।
हेममारं च तारं च तीक्ष्णं वङ्गभुजङ्गमौ ॥ ५२ ॥

१. 'नन्तारु', २. 'मांशं रो', ३. 'ह' ख. पाठः.

सर्वमेतत् समादाय खल्वेद् गन्धकादिभिः ।
तच्चूर्णं माक्षिकसमं द्विगुणं पारतं भवेत् ॥ ५३ ॥
पञ्चभिर्लवणैर्युक्तं विषगन्धकयोजितम् ।
मातुलुङ्गफलैः भिन्नं [illegible] निधापयेत् ॥ ५४ ॥
मासे मासं तदुद्धृत्य विषं पित्तं च दापयेत् ।
मातुलुङ्गरसं चैव प्लावयेत पुनः पुनः ॥ ५५ ॥
षण्मासे तु समुद्धृत्य शतनागस्य वेधयेत् ।
सगुञ्जाफलसङ्काशं शर्दिते शतधा हतः ॥ ५६ ॥
तन्नागं तारताम्रेषु शतांशेनैव वेधयेत् ।
तद् भवेत् काञ्चनं दिव्यं देवमानुषभूषणम् ॥ ५७ ॥
पञ्चैव शुल्वं भुजगद्वयं च वेध्यं तदेकेन रसेन तेन ।
वेधानुवेधी जगति प्रदिष्टो वेधारसस्तारशतांशवेधी ॥ ५८ ॥
विमलस्तु मणिर्दिव्यः स वै काञ्चनसन्निभः ।
योजितो मणिमन्थेन कांक्षिकासीसगैरिकैः ॥ ५९ ॥
स्वर्चिकाया समायुक्तं कुनट्या पारतेन च ।
यावदेतद् भवेत् सर्वं तावद् विमलको मणिः ॥ ६० ॥
वसुपित्तसमायुक्तं गोमूत्रे सुपरिप्लुतम् ।
एवं कृत्वा यथान्यायं मासं शृङ्गे तु स्वेदयेत् ॥ ६१ ॥
तेन नागं प्रतीवाप्य यावद्धाटकसन्निभम् ।
आहतस्तु विशीर्येत ततो वेधं तु कारयेत् ॥ ६२ ॥
तेन तारं शतांशेन विद्धमुत्तमतां व्रजेत् ।
ततः पञ्चमभागेन कनकं शाश्वतं भवेत् ॥ ६३ ॥
नेत्राभरणसंयुक्तं मालतीतीरसम्भवम् ।
रम्भारसपरिक्लिन्नं द्रवीकुर्वन्ति पायसम् ॥ ६४ ॥
पलमेकं तु माक्षीकं पारतस्य पलद्वयम् ।
सौवर्चलस्य त्रिपलं सैन्धवस्य पलं तथा ॥ ६५ ॥
स्वर्चिकार्धपलं चैव श्लक्ष्णचूर्णानि कारयेत् ।
यावदेतद् भवेत् सर्वं तावद् भवति सूतकम् ॥ ६६ ॥

ताम्रतारसुवर्णानि त्रपुतीक्ष्णोरगस्तथा ।
एतेषां पलमेकं तु घातयित्वा तु योजयेत् ॥ ६७ ॥
बीजपूररसोन्मिश्रमश्मभाण्डे निधापयेत् ।
निखनेज्जानुमात्रे तु शकृदग्निं च दापयेत् ॥ ६८ ॥
मासमात्रं स्थितं त्वेनमुद्धरेत महारसम् ।
सरसो विद्युदाभासो भ्राजते माक्षिकोद्भवः ॥ ६९ ॥
तत्रैकं पलमादाय नागे पलशते वपेत् ।
तन्नागं विद्धमात्रेण गुञ्जावर्णसमद्युतिः ॥ ७० ॥
तत्रापि पलमादाय तारे पलशते वपेत् ।
तत्र वै कनकं दद्याद् दशांशं हाटकं शुभम् ॥ ७१ ॥
रसकं गृह्य संशोध्य कण्टकारीरसेन तु ।
ततस्तमातपे तप्तं गुलेन त्रिगुणीकृतम् ॥ ७२ ॥
पचेत् सिद्धार्थतैलेन तिलतैलेन वा पुनः ।
गृहधूमकसङ्काशो रसकस्तु यदा भवेत् ॥ ७३ ॥
षट्पलं रसकं तस्मात् पाकचीर्णं रसात्पलम् ।
गन्धकूर्पा च काक्ष्याश्च कुनटी स्वर्चिका तथा ॥ ७४ ॥
प्रमाणतोऽत्र निर्दिष्टा भागास्ते कार्षिकाः स्मृताः ।
द्वे पले शुल्बचूर्णस्य लोहचूर्णपलद्वयम् ॥ ७५ ॥
तस्मात् पलं समादाय मधूच्छिष्टेन वेष्टयेत् ।
तेन तारं शतांशेन हेमं जाम्बूनदप्रभम् ॥ ७६ ॥
तत्तु शुल्बप्रलेपेन निर्बीजं हाटकं भवेत् ।
सर्वशास्त्रविदा दृष्ट्वा माण्डव्येन महर्षिणा ॥ ७७ ॥
तृणगुल्मलतावल्लीः परीक्ष्य मतिमान् भुवि ।
कालेनाल्पेन यत्नेन तारहेमप्रबोधनम् ॥ ७८ ॥
वनमाल्येति विख्याता रसबन्धकरी शुभा ।
वक्ष्यते विधिवत् तस्माद् दिव्यौषधिमहौषधीः ॥ ७९ ॥
परीक्ष्य लक्षणैरेवं क्रियां कुर्वन्ति पण्डिताः ।
क्वचित् क्वचित् प्रजायन्ते चौषधानि महीतले ॥ ८० ॥

नेत्रां [illegible] चिह्नानि छिन्नं च फले च यत् ।
नाभिला नहुषी नागा चोइना वन्तुम्नका ॥ ८१ ॥

त्रिदण्डी रानपुष्पी च हर्षी त्रिवका इति ।
सेवा मोगवर्ना मोमा नर्गिको स्थूलकान्तिला ॥ ८२ ॥

नान्दी ईर्ष्यी मलोष्ना वंहिणी नोलकिम्बका ।
[illegible] [illegible] स्फजिका चवामुक ॥ ८३ ॥

कुमुदी कुदुम्भा शङ्खविश्रुतिन्धानननी ।
नागचास्तम्भसिरथीं काथिनी नीक्ष्णा निलकपत्रिका(?)॥ ८४ ॥

अम्बष्ठिका कुरङ्गी च कुमारी विषपर्विका ।
तेजोवती सहस्रांशा सानुनांशुमनोदिखा ॥ ८५ ॥

पौण्डरीका सुपर्णा च मुक्ता करवीरिका ।
वज्रा काकपदी चैव नरदेवा मरोचना ॥ ८६ ॥

यक्षिणी मरुलानन्ता कामिनी ललकम्बुना ।
कपिला दासिवल्ली च वोणसी मूशिरीवका ॥ ८७ ॥

त्रिशूली त्रिशिखा चैव कुस्तुम्बुरुमहौषधिः ।
तथा सर्षपपर्णी च पीतकोद्रवमारिका ॥ ८८ ॥

रक्तपुष्पा कुरवकी हुताशनतरुर्यथा ।
घटाग्रं करविका चैव मूकदम्बानलद्रुमा ॥ ८९ ॥

सर्वच्छेदनिका चैव गोमारी चाजमारिणी ।
रसबन्धविधौ प्रोक्ता महौषध्यस्तु सप्ततिः ॥ ९० ॥

शेषा वीर्यगुणोपेताः सन्ति चाभ्रकचारणाम् ।
नाभिला नाम गुल्मः स्यात् - - - - - - - - - - ॥ ९१ ॥

नन्दापत्रसमा पत्रैः पुष्पैश्च - - - पर्वकैः ।
स्वरसं तस्य निष्पीड्य समूलदलसंभवम् ॥ ९२ ॥

खल्वपाषाणके पिष्ट्वा सूतकस्य पलद्वयम् ।
ईषल्लवणमिश्रं तु पलेनाभ्रस्य चारयेत् ॥ ९३ ॥

---

१. 'स्थू', २. 'शूलस', ३. 'ऊर्ध्व' ख. पाठः.

तत्क्षणादेव संभक्ष्य नवनीतोपमो भवेत् ।
ततोऽन्येऽहनि सोष्मेण जारयेच्चारणेन तु ॥ ९४ ॥
चतुर्थेऽहनि जीर्येत नाभिलाया महोष्मणा ।
पञ्चमे त्वभ्रकं चार्यं षष्ठेऽहनि विजीर्यते ॥ ९५ ॥
अभ्रकं तु पलं दद्यात् सप्तमेऽहनि चारयेत् ।
अष्टमे चारयेदभ्रं नाभिलाया महोष्मणा ॥ ९६ ॥
नवमे दशमे चैव चारितं जारितं पुनः ।
एवं चानुक्रमादभ्रं पष्ठं प्रक्रामितं भवेत् ॥ ९७ ॥
गन्धकं च भवेत्तीक्ष्णं दरदं च + + + + + ।
+ + + + + + दद्यादेकैकस्य पलं पलम् ॥ ९८ ॥
दिने दिने तु सञ्चार्य जारयेत् पूर्ववत् क्रमात् ।
सिद्धिमाप्नोति च महत् + + + + + + + + + ॥ ९९ ॥
सहस्रवेधी सर्वस्मिन् इन्द्रगोपकसप्रभः ।
चारणाज्जारणादुक्तं क्रामणं च भविष्यति ॥ १०० ॥
पूर्वोक्तास्तु महौषध्यः कर्मणा नाभिलासमाः ।
सुरमुत्तमसनीला च चारणी चाभया स्मृता ॥ १०१ ॥
कृष्णेङ्गुदा हस्तिकर्णी नागिनी चैकमूलिनी ।
स्थलसमङ्गापमार्गा जारा मण्डकपत्रिका ॥ १०२ ॥
मार्जारपादी महिरा वाराही गण्डिका शिखा ।
सुवर्णपुष्पी गरुडी केतकी पारिजातकी ॥ १०३ ॥
*तिला जातिविष्यन्दा सुरभी चाम्लवेतसीः ।
पुंश्चपत्रा . . . . विष्णुक्रान्ता पराजिता ॥ १०४ ॥
कुहेटकः श्वानपुच्छा श्वेता च गिरिकर्णिका ।
आपीतिका कोविदारा श्रीदन्ती रसदूतिनी ॥ १०५ ॥
नीलोत्पला नरदेवा शिग्रुका विषवृक्षका ।
धूसरा ब्रह्मवृक्षश्च पञ्चविंशतिपर्विका ॥ १०६ ॥
†नीलोऽर्धाङ्गुलिका सारा लशुनी पीलुपत्रिका ।
अटवी कर्णिका नाम गण्डकी कृष्णवल्लिका ॥ १०७ ॥

---

* 'नीलाञ्जलीका विष्यन्दा' इति स्यात् । † 'सिंहिलाङ्गुलिका' इति स्यात् ।

शर्मी ^1^च सुचित्रिफला तथा आदित्यवल्लिका ।
राजकोशातिका ताली पालुस्तिउकवल्लिका ॥ १०८ ॥
आम्रातकी जनित्रा सा कटुका चैव रेणुका ।
चर्चिका कण्ठकाली च केसरी चक्रमर्दकः ॥ १०९ ॥
ब्रह्मपुत्रश्च शर्वरी नेत्रपुष्पा द्रवन्तिका ।
त्रिवृत् देवदाली पाटली भूतकेशिनी ॥ ११० ॥
एवमादीनि चाप्यस्य जठराह्लिकाः स्मृताः ।
अ(न्तःपु ? तः प)रं प्रवक्ष्यामि मूलीनां स्पर्शवेधिनाम् ॥१११॥
दिव्यौषधीं तु तां विद्यां पुष्पपत्रफलोपमैः ।
श्रीजया विजया नीला त्रिदिनाऽऽगिनीद्रुमाः ॥ ११२ ॥
वज्रिणी वज्रनाराची सिंहिका घनमुस्तका ।
ब्राह्मणी गरुडा वीरा भ्रमरी मीनवल्लिका ॥ ११३ ॥
तथा ताम्बूलवल्ली च * सर्षपी कुर+विका ।
सप्तपर्णी च रोहिणा शाकी कुरवकी तथा ॥ ११४ ॥
गोरोचना (मधुतृणं शुण्ठो) भूनिकदम्बिका ।
शशकर्णी हेमलता वारुणी शिफया तथा ॥ ११५ ॥
खद्योता भूमिसङ्कोचमूर्ध्नी स्यादमृताशनी ।
देवश्री पद्मदण्डा च तथाच पृथिवी समा ॥ ११६ ॥
मृगदूर्वा हस्तिमता श्यामका कीटमारिका ।
विना रसेन तेऽपि स्यु ... पिते रसे ॥ ११७ ॥

एतच्च साम्प्रतं प्रोक्तं प्रवक्ष्यामि तदा दिव्यौषधयः । नहुषी नाम फलकसदृशप(त्रा) सक्षीरा । वारा नाम तण्डलीयकसदृशपत्रा सक्षीरा । उद्गता नाम मूलकसदृशपत्रा सक्षीरा । नागोदरी नाम निष्पत्रा वृत्ता सर्वमात्रा । घनमुस्तका नाम भद्रमुस्ताकाकारा गुल्मघोरविषकरः च्छे पाण्डुलसदृशपत्रा (?) । त्रिदण्डी नाम पूर्वोक्तमेव । शतपुष्पिका नाम शतपुष्पसदृशपत्रा सक्षीरा । छत्रा नाम

१. 'चविका' इत्यपि क. पाठः.

* 'वस्तु कृष्णफला' इति स्यात् । + 'रोहिता सप्तपर्णिका । शाकी कुरनको चैव सर्षपी करवीरका' इति व्याख्यानुसारी पाठः स्यात् ।

पूर्वोक्तमेव। विषधरा नाम अङ्कोलसदृशपत्रा सक्षीरा। मेघाश्मना नाम कृष्ण-दीर्घपत्रा। भोगवती नाम नन्द्यावर्तसदृशपत्रा लता। सोमा नाम पूर्वोक्तमेव। मरीची नाम उत्पलपुष्पवत् शिरीषपत्रा सक्षीरा(थ? स्थल)पद्मिनी पूर्वोक्त-मेव। ताली नाम तालपत्राकारा पीतपुष्पा। (श्र?) मूली नाम न्यग्रोधसदृश-पत्रा सक्षीरा। समोपेता भृङ्गसदृशपत्रपुष्पा सक्षीरा। दंष्ट्रिणी नाम चक्रपत्रा-कारपत्रा सक्षीरा। नीलचित्रका नाम पूर्वोक्तमेव। ऊर्ध्वकेशी नाम ऊर्ध्वकेशो भवति। अधोपर्णी कृष्णरक्तपुष्पा सक्षीरा पर्णान्यधोमुखानि भवन्ति। रक्तजिह्वा जिह्वाकारवत् सरक्ता सर्वलोहनुदग्राहेति। मावला कृकालगर्भसदृशपत्रा। रक्तपुष्पा मधुमधुयष्टिमधुकपत्राकारसदृशपत्रा सक्षीरा। काली दर्भपत्राकारपत्रा पीतमूला। तीक्ष्णा (तीक्ष्णा?) दीर्घस्निग्धहरितपत्रा सक्षीरा। तिलकपत्रिका ति-लकसदृशपत्रा। अम्वष्ठिका निल्याकारच्छाकारपत्रा सक्षीरा। एकमूली पीतवर्णा घनोपरसतीक्ष्णा गगनादीनि चारयति स्पर्शवेधिनं (क?)रमं करोति। कुमारी नाम पूर्वोक्तमेव। विषपर्वा नाम चिञ्चाकारपत्रा पीतमूला सक्षीरा सविषा। तेजोवती नाम पूर्वोक्तमेव। सहस्रांशा वञ्जुलसदृशपत्रा सक्षीरा घनतालादीनि चारयति, दशमसारं करोति। अमृता सोमसदृशपत्रा लता। अंशुमतीशिखा कदम्बाकारपत्रा सशिखा भवति। पौण्डरीका अभयाकारपत्रा सक्षीरा। सुपर्णी दीर्घरक्तपर्णा। (सुरक्ता) अग्रेरक्ता रक्तमूला सक्षीरा सुरा भवति।

वज्रा नाम तथैव। काकपदी काकपदाङ्कितपत्रा घनतालादीनि चारयति नागवङ्गं च वर्धति। हरनेत्रा तथैव करोति। राधना पुन्नागसदृशपत्रा स-क्षीरा। यक्षिणी अर्जुनपत्राकारपत्रा अभ्रकोपरसादीनि चारयति। सरला नाम सरलपत्राकारपत्रा वल्ली पीतरसा। काशी नाम काशाशकोशा भवति। तिलकदम्बका नीलपुष्पा। कपिला नाम कपिलवर्णा कन्दवती। दासी-वल्लिका नाम मोहिनीपत्राकारपत्रा रक्तपुष्पी स्त्रीणां वशं करोति। घोणसी घोणसर्पाकारवल्ली। (शिरीवि? भूशिरीषका)शिरीषपत्राकारपत्रा (पुष्पा च?)। त्रिशूली तथैव। शिला नाम कदम्बपत्राकारपत्रा, तिस्रः शिला भवन्ति। (कुस्तुम्बुरु कुस्तुम्बुरुसमानफला भवन्ति?)। सर्वच्छेदनिका स्पर्शा(न्? त्) सर्वंश्छिद्यतं। गोमारी नाम पूर्वोक्त एव। अजमारी अजाः भक्षिता म्रियन्ते। तदश्रर्केण पेषयित्वा आतपे स्थापयेद् द्रवति। श्रीविजया नाम कलमण्डू-कपत्रसदृशपत्रा भूम्यां प्रसार्यते रक्तक्षीरा ताम्रे शतं विध्यति। विजया

तु परिपत्रसदृशपत्रा ईषदेवोत्तिष्ठति शुक्लक्षीरा तारपत्रप्रलेपन पुटपाकेन हेमं करोति। नीला नाम भृङ्गराजसदृशपत्राकारा पीतपुष्पा सर्वलोहानि विध्यति। खदिरा नाम समङ्गासमा अग्ररक्ता रक्तक्षीरा ताम्रे शतं विध्यति। नाशिनी चित्रकसदृशा त्रिकोणवल्ली तिक्तकटुका सर्वलोहेषु विध्यति। द्रुमा एरण्डसदृशपत्रा निचुरपुष्पसदृशपुष्पा श्वेतक्षीरा ताम्रे शतं विध्यति। यदि रक्तक्षीरा सर्वलोहानि विध्यति। वज्रिणी नाम कोविदारसदृशपत्रा पत्रेषु रक्ता रक्तक्षीरा सर्वलोहानि विध्यति। वज्रनाराची रक्तसहचरसदृशपत्रा तिक्तकटुगन्धा तस्याभ्रचूर्णं तत्समं द्रवति। सिंहिका नाम बहुपुत्रिकासदृशपत्रा श्वेतक्षीरा नीलपुष्पा वङ्गं स्तम्भयति। पीतमुस्तका नाम मुस्तकसदृशकन्दा वाकुचीसदृशपत्रा पीतक्षीरा ताम्रे शतं विध्यति। गरुडा नाम कार्पाससदृशपत्रा रक्तपुष्पा रक्तनाला पद्मरागसदृशाङ्कुरा पीतक्षीरा सर्वलोहानि विध्यति ! कुमारी भृङ्गसदृशपत्रा पुष्पाणि पीतानि सर्वलोहानि विध्यति। चिलवल्ली बिल्वपत्रसदृशपत्रा रक्तक्षीरा ताम्रं शतं विध्यति। ताम्बूलवल्ली नाम ताम्बूलवद् भवति रक्तक्षीरा ताम्रे शतं विध्यति। रोहिता चणकपत्रसदृशपत्रा सर्वलोहानि विध्यति। सप्तपर्णी सप्तपर्णीवत्पत्रा लता ईषदेवोत्तिष्ठति वङ्गस्तम्भं करोति। शाकी लोकपत्राकारपत्रा वल्ली विध्यति। कुरवकी कुरवकसदृशपत्रपुष्पा ईषदेवोत्तिष्ठति, रक्तपुष्पा हरिद्रमूला विषरसमर्कटहिङ्गुलीकेन सह चारयित्वा ताम्रं प्रलिप्य पुटं दद्यात्। सर्षपा नाम सर्षपपत्रा पीतक्षीरा हस्ततले ताम्रं शतं विध्यति। करवीरा कारविसदृशपत्रा रक्तनाला रक्तक्षीरा ईषदेवोत्तिष्ठति ताम्रे शतं विध्यति। (गे ? गोरोचना).... आस्ये प्रक्षिप्य दन्तच्छलीकृत्वा मुखलेपं जायति गोरोचनवर्णसदृशवर्णो भवति। तस्या रसे ताम्रं निषिञ्चेद्धेमं भवति। मधुतृणं नाम मधूच्छिष्टवच्चिक्कणं भवति। मक्षिकचीर्णं च तद्द्रावणायोगो भवति। शुण्ठी नाम सुरभितृणपत्रा तस्य कन्दं घनमुदरग्राहिणं करोति। भूमिकदम्बिका कदम्बपुष्पसदृशपत्रा पीतक्षीरा ईषदेवोत्तिष्ठति विषपारतगन्धतालैः सहाम्लेन चारयित्वा ताम्रे प्रतिवपेत् हेमं भवति। खद्योता नाम खद्योतसदृशपत्रा ज्वलति तृणजातिः तीक्ष्णं ताम्रं करोति। भूमिसङ्कोचा कलबुकपुष्पसदृशा पत्राणि मण्डलानि रक्तक्षीरा ईषदेवोत्तिष्ठति सर्वलोहानि विध्यति। मूर्वी नाम निम्बपत्राकारपत्रा पीतपुष्पा लता ताप्यं जारयति। अमृताशनी नाम। देव-

श्रीस्तामतातुल्यं पृथिवीलाभे पत्राणि मयूरचन्द्रिकावत् पुष्पाणि मयूरग्रीवसदृशानि नालोऽस्य रक्तचन्दनगन्धिका कन्दोऽस्य कपोतवद् भवति रस(स्ति? ति)क्ता नवनीतगन्धा नवनीतस्पर्शा तां गृहीत्वा तीक्ष्णं लेपयित्वा सहस्रांशेन वेधयेत् हेमं भवति हस्ते बद्ध्वा अदृश्यो भवति क्षीरेणोपयुज्यमानो द्विरष्टवर्ष(व)या भवति सहस्रवर्षायुः। पद्मदण्डा नाम तृणजाति(ः) पद्मपुष्पवर्णानि तस्य मूलानि सर्वलोहानि विध्यति। पृथिवी नाम उपोततसदृशपत्रा रक्तक्षीरा रक्तनाला श्वेतक्षीरा ताम्रे शतं विध्यति। मृगदूर्वा नाम वल्ली रक्तनाला प्रवालसदृशाङ्कुरा निष्पीड्यमाना रक्षारसमिव रसं स्रवति तस्मिन् तस्मिम् रसे ताम्रं निषेचयेत् हेमं भवति। हस्तिमता नाम महामात्रा जान(?य)न्ति तां भक्षयित्वा हस्तिनो मदं कुर्वन्ति क्षिप्रमेव तस्या रसे ताम्रं निषेचयेत् हेमं भवति। कीटमारी नाम कीटानि म्रियन्ते गुल्मजातिशरपुङ्खसदृशपत्रा तस्या रसे ताम्रं निषेचयेत् हेमं भवति। एतानि दिव्यौषधयः। अभया नाम अहिमारकसदृशपत्रा उपरसानि चारयति। कृष्णेङ्गु(दसमानः? दा नाम) अभ्रकोपरसानि चारयति। हस्तिकर्णी नाम घनं चारयति। एकमूलिका। नागिनी नाम घनसुदरग्राह्यं करोति। अरुणी नाम वटपत्राकारपत्रा गन्धकं चारयति। सेव जारयति। स्थलस्रमङ्गा नाम तीक्ष्णं जारयति। अपामार्गा नाम घनं चारयति। जरा नाम अहिमारकसदृशपत्रा सक्षीरा घनोपरसानि चारयति पञ्चमसारं करोति। महरा नाम समुद्रतटजा पीलुपत्रसदृशा अभ्रकसदृशं रसं बन्धयति। वाराही नाम। गण्डिका नाम हस्तिवारुणीसदृशपत्रा हरिद्रमूला समुद्रतटजा माक्षिकं चारयति। शिखा नाम घनोपरसानि चारयति। सुवर्णपुष्पी नाम घनं चारयति। गरुडी नाम सक्षीरा हरितालं चारयति। केतकी नाम केतकिगन्धा सक्षीरा कनके घनोपरसं ताप्यं तीक्ष्णानि चारयति। पारियातकी नाम पारियातकसदृशपत्रा लता रक्तपुष्पा उपरसानि चारयति। नीलाञ्जलिका नाम। विष्यन्द्री नाम वृत्ता (च?) चम्पकपत्राकारपत्रलता घनं चारयति। सुरभी नाम। अम्लवेतसी नाम उपरसानि चारयति। अश्वत्थपत्रिका नाम अश्वत्थपत्राकारपत्रिका पीतपुष्पा हरितालं चारयति। विष्णुक्रान्ता नाम। पराजिता नाम ताप्यं चारयति। हेटको नाम अर्जुनपत्राकारपत्रा घनमाक्षिकं चारयति। कोविदारी नाम अम्बष्ठपत्राकारपत्रा घनं चारयति। श्रीमती नाम पलिकपत्राकारपत्रा

घनं चारयति । श्वानपुच्छा नाम मनश्शिलां चारयति । श्वेतगिरिकर्णिका मूलं ब्रह्मवृक्षमूलेन सह घनं चारयति । आपीनिका गुञ्जाकारपत्रा पीतपुष्पा गगनतालगन्धादि चारयति । रसदूती घनं चारयति । नीलोत्पला नाम नीलोत्पलसदृशपत्रपुष्पा रसोपरसानि चारयति अमराभ्रकं चारयति । देवनाम श्रीपतिपत्राकारा आरग्वधितमभ्रपिण्डं करोति । धुस्तुता नाम शिंशपत्राकारपत्रा पीतपुष्पा मनःशिलां चारयति । विषवृक्षका च कारमूलेन सह घनम् । धूसरा मल्लकीसदृशपत्रा तस्या मूलं दन्तचर्वितं कृत्वा निष्ठीव्य घनोपरसानि चारयति । बन्धकी बन्धकाकारपत्रा अभ्रकोपरसानि चारयति । शतपर्वा घनं चारयति । सिंहिलाङ्गुलिका उपरसानि चारयति । सारा अशोकपत्राकारपत्रा घनोपरसानि चारयति । लशुनी नाम लशुनगन्धा मुष्ककसदृशपत्रा घनं चारयति । पीलुपत्रिका तिस्रोऽपि(?) घनं चारयति । अटवी सङ्कुचि(?) । कर्णिका घनमुदरग्राह्यं करोति । कृष्णवल्ली दीर्घस्निग्धपत्रा सक्षीरा कृष्णपक्षकृष्णवर्णा घनोपरसानि चारयति । शमी शमीपत्राकारसदृशपत्रा माक्षिकं दरदं तीक्ष्णानि चारयति । वस्तुनाम वल्ली रक्तवर्णा कान्तं घनमुदरग्राह्यं करोति । कृष्णफलं घनं चारयति । आदित्यवल्ली अभ्रकतीक्ष्णं चारयति । राजकोशातकी मूलं नेत्रवृक्षमूलेन घनं चारयति । नाडी । पीलुवृक्षमूलं पलाशमूलेन घनोपरसानि चारयति । कन्दकी तिलपुष्पसदृशा घनोपरसानि चारयति दशमसारं करोति । आम्लातकी आम्लपत्राकारपत्रवल्ली लता गन्धानि चारयति । जनित्रा तस्या मूलेन घनोपरसानि चारयति । कटुका पञ्चपत्रा रक्तपुष्पा मुखेन रसं दारयति । केसरी सुरभिगन्धा पुन्नागसदृशपत्रा तस्या मूलेन घनोपरसानि चारयति सप्तमसारं करोति । रेणुका काकमाचीपत्रा घनोपरसानि चारयति छलीकृत्वा घनोपरसानि चारयति । ब्रह्मणः पुत्रको नाम उत्तमकर्णीमूलेन सह घनं चारयति । शबरी नेत्रवृक्षा द्रवन्ती घनं चारयति । त्रिवृत् त्रि ता देवदाली च घनं चारयति । काकमाची घनं चारयति । भूमिपाटली पाटलीपुष्पसदृशा हरितालमनश्शिलागन्धकानि चारयति । केशी नाम घनं चारयति । चित्रा कृष्णमूला घनोपरसानि चारयति । सुरभिचित्रकसदृशपत्रा वल्ली घनं चारयति । कलिनरा निष्पत्रा घनं चारयति । सन्न्यासेषु द्रावणेषु विशेषतः ।

रसेन्द्रं वेधकं कुर्यादभ्रकेण तु चारणात् ।
तस्मादभ्रं तु सञ्चार्य पूर्वमग्निसहं रसम् ॥ ११८ ॥
कृत्वा कर्मान्तरं कुर्यादभ्रजीर्णेन वेधकः ।
एतन्मूलं रसेन्द्रस्य गुह्यमाप्तोपदेशतः ॥ ११९ ॥
चारणाद् दोषनिर्मुक्तं प्राप्यते चाग्निसन्निधौ ।
सूतकं खल्वपाषाणे द्रावणौषधिभिर्विना ॥ १२० ॥
अभ्रकं चारयेदन्यैरेवं न क्षयतां व्रजेत् ।
नाग्निस्थो न चरेदभ्रं जठरग्राह्यकैरपि ॥ १२१ ॥
नाजीर्णं च नाग्निस्थो नच रञ्जेन्न वेधयेत् ।
स भवेदुदरग्राही सूतकः सुखमूष्मणा ॥ १२२ ॥
चारितं चाग्निसंस्थं च दाशपाशनरञ्जनैः ।
चारणादङ्गुलिग्राह्यो निश्चलो निर्ममस्तथा ॥ १२३ ॥
बहलकृष्णवर्णश्च जलूकाखण्डशोऽपि वा ।
हस्तच्छेद्यस्सदा पश्येज्जारणाज्जारणौषधैः ॥ १२४ ॥
गन्धकामलहिङ्गूनि लवणानि च मात्रया ।
दत्त्वा संस्वेदयेदुष्णैर्मूत्रक्षारफलाम्बुना ॥ १२५ ॥
आयसे मधुना वापि स्वेदयेत् तदनन्तरे ।
तालकं पाचनं श्रेष्ठं गन्धं पाशनमुत्तमम् ॥ १२६ ॥
रञ्जनं दरदं तुत्थं विमलं सर्वकर्मिकम् ।
षोडशांशं चरेदादौ षोडशांशेन तत्समम् ॥ १२७ ॥
जारितं पादमधिकं द्वितीयं सारणं च यत् ।
तृतीयमर्धमधिकं चतुर्थं चाष्टमं चरेत् ॥ १२८ ॥
एवं चानुक्रमं कुर्यात् षड्गुण्यान्तं गमिष्यति ।
अथवा पञ्चदशके (भागे?) एकं तत्र प्रचारयेत् ॥ १२९ ॥
त्रिमासे सुखतासिद्धिः षड्गुणं जीर्णतां व्रजेत् ।
एवं सञ्चारयेच्चीर्णं द्विगुणं वा चतुर्गुणम् ॥ १३० ॥
सारणानुसारेण क्षीणबीजानि समासतः ।
स्वेदं विना न तीव्रं स्यान्नामर्दे विमलो भवेत् ॥ १३१ ॥

+ नाचीर्णोऽपि बलवान् नाजीर्णोऽग्निसहो भवेत् ।
न व्यापी बीजरहितो नाद्रुतस्त्वेकतां व्रजेत् ॥ १३२ ॥

नारक्तो वेधयेद्बहुलो नाक्रान्तो न विसर्पति ।
क्षाराणां रक्तपीतानां मूत्राणां च भस्मना ॥ १३३ ॥

गालयेत् सर्वमूत्रैस्तु मूकाभ्रं भावयेद्बहु ।
आम्लवर्गेण सम्भाव्य जठराग्निहिमूकेना ॥ १३४ ॥

चारयेत् सर्वमूत्रैस्तु संप्लाव्य च पुनः पुनः ।
आयसे भाजने स्थाप्य तन्मुष्ट्या चाग्निमध्यतः ॥ १३५ ॥

छेदनोद्दीपनैश्चोष्णैः शीतैन क्षालयेत् ततः ।
अशोकपारिभद्रैश्च पलाशशाल्मलिचित्रकरवीरैश्च ।
पाटली बहुवैरण्डनिचुलोऽगस्तिविदारिरक्तपाङ्गिनी ॥ १३६ ॥
रक्तक्षारा + सर्पाक्षी + ++ वृत्तवर्णिनी ॥ १३७ ॥

आर्द्रका रक्तपुष्पी च बृहती बहुपत्रिणी ।
डाडिमं कुरटी डोमा ++ वर्ताम्लया ++ ॥ १३८ ॥

रक्तचन्दनपत्तङ्गं कुसुदं शतपर्विका ।
एवमादीनि चान्यानि रञ्जनानि समाहरेत् ॥ १३९ ॥

दणाककर्णिकारश्च विद्धङ्गं व्याधिघातकम् ।
असनं सुवर्णपुष्पी च कूश्माण्डाम्रकार्पासकारकम् (?)॥ १४० ॥

कोशातकी सुवर्णी च हरिद्रा तप्तसङ्कुदम् ।
कोष्ठजिह्वा सहचरा आखुजिह्वा सुवर्चला ॥ १४१ ॥

वीरा काश्मर्यकश्चेति पीतकानि विनिर्दिशेत् ।
वटोदुम्बरमश्वत्थप्लक्षास्फोतार्कोत्तमाख्यं पयसि महिषा ।
गिरिजवकाकोदुम्बरिकादीनि पाशनानि विशेषतः (?)॥ १४२ ॥
यथालाभं समाहृत्य दग्धभस्मत्रिकेण वा ॥ १४३ ॥

ना + गोखरगोजानां माहिषाविकनारजैः ।
मूत्रैश्चतुर्गुणैः प्लाव्य गालयेदेकविंशतिम् ॥ १४४ ॥

अभ्रकस्य भवेदेवं जारणं च विशेषतः ।
जारणे चाग्निमध्ये तु क्षीणे क्षीणे निषेचयेत् ॥ १४५ ॥

एतद्धि कथितं सम्यग् दाशपाशनरञ्जनम् ।
अतःपरं प्रवक्ष्यामि दीपनच्छेदनं क्रमात् ॥ १४६ ॥

यावता समचीर्णाभ्रं पक्षक्षयमथाश्नुते ।
तस्मान्नियामकैर्बद्ध्वा चारयेदग्निमध्यतः ॥ १४७ ॥

चारितं चाभ्रकरसं दाशपाशनरञ्जनम् ।
छेदनी च सुरा तस्मात् प्रक्षिप्योपरि तद्रसम् ॥ १४८ ॥

चीर्णोदरं ततो ज्ञात्वा काञ्जिकेन सुखोष्णतः ।
प्रक्षालनान्निर्मलीभूतं पुनरेवं प्रचारयेत् ॥ १४९ ॥

अजीर्णो यदा तदा अग्निवर्णोरुणा वारयेद्रसम् (?) ।
यदा षड्गुणसंजीर्णस्तदा सम्यग् द्रुतो भवेत् ॥ १५० ॥

अग्निष्ठो न क्षयं गच्छेदिति शास्त्रस्य निश्चयः ।
मत्स्याक्षी लाङ्गली काकमाची च ++++++ ॥ १५१ ॥

++++++++ वर्षाभू वृत्तवर्णिनी ।
एवमाद्या रसेन्द्रस्य दीपभावं नियोजयेत् ॥ १५२ ॥

छेदनार्थं रसं दृष्ट्वा चारणाघनसूतकम् ।
अस्ता कुरवकी रक्तकाञ्चुकी पीतचोरका ॥ १५३ ॥

ब्रह्मदण्डी विषालुश्च रक्तः + चक्रमर्दकः ।
मेषमुष्का सलवणा काकजङ्घा विदारी (?) ॥ १५४ ॥

व्याघ्रपादी व्रीहितुषा रुदन्ती प्रावृषी . . ।
ज्वालोऽभ्रमारिणी + + + + + + + + . . ॥ १५५ ॥

जारणा छेदने योज्या लोहचीर्णोऽभ्रचीर्णतः ।
कदम्बपुष्पी भूनिम्बा शारी काचशुकस्तथा ॥ १५६ ॥

शूलीयवचिञ्च्या सा तथा चाम्लवेतसा (?) ।
ज्योतिष्मत्या सहैतास्तु क्रामणा द्रावणा परा ॥ १५७ ॥

स्वे स्वे कर्मान्तरे श्रेष्ठा सङ्घाते सर्वकर्मिका ।
वन गिरि + + श्रेष्ठाग्निवर्णी यवचर्चिका ॥ १५८ ॥

गोपाली कञ्चुकी रक्ता हेमगृध्रापराजिता ।
आकुली रक्ततुम्बा च नतुम्बा भूमिपाटली ॥ १५९ ॥

शाकन्दा जावाली वसा रक्तास्या रञ्जतेऽशुका ।
हेमाभ्रपटला रक्ता रसैरुपरसैः सह ॥ १६० ॥

चारयेन्मूलिभिर्म्नोयैस्तद्वर्णं लभेत रसः ।
ओषधीनामलाभे तु बीजतैलं च चारयेत् ॥ १६१ ॥

रसांश्चोपरसांश्चैव भावितान् रक्तपित्तजैः ।
संहारमूलिभिर्वापि चारणं जारयेद् रसम् ॥ १६२ ॥

रसोत्तरं तथा हेमं द्रुतबीजं सुरञ्जयेत् ।
-- -- रसोपरसजैश्चूलिभिर्लोहवर्गजैः ॥ १६३ ॥

मूलिभी रञ्जितासूतो बहुवर्णो विराजते ।
सुकरं रञ्जनं चैतद् वेधनं तारताम्रयोः ॥ १६४ ॥

चारणैर्जारणैः प्रोक्तो द्रावणे युक्तिमार्गतः ।
एकनालीगुजडाग्रपुष्पा तु लाक्षारसन्निभा ॥ १६५ ॥

करालैश्च पुष्पतो रक्तास्तस्याताम्ररञ्जनी ।
पुटेन पाचिताशोध्यं स्फुटेत रसतेजसा ॥ १६६ ॥

सन्ततं क्षपयेत्तोये . . . . . -- -- ।
उदधौ केतकीपूते रसेन्द्रश्च सुरज्यते ॥ १६७ ॥

चारजारज - - - भरणाविधौ ।
ततोऽन्या तारजातीनां श्वेतपुष्पा क्रियावहा ॥ १६८ ॥

पाटलीपत्रसदृशैः पत्रैः पुष्पैः सुरक्तजैः[1] ।
वल्ली नातिविसर्पी च नाम्ना वै भूमिपाटली ॥ १६९ ॥

सा चरेद्रसधातूंश्च रसान्यपि च रञ्जयेत् ।
नागे निर्वापितं कुर्याच्चामीकरसमप्रभम् ॥ १७० ॥

कन्देन गृध्रसदृशा पीतवर्णा हरिद्रवत् ।
पत्रैस्तु बहलैर्दीर्घैर्हेमगृध्रेऽतिविश्रुता १७१ ॥

---

१. 'कै' ख. पाठः.

रक्तपीतानि पुष्पाणि भङ्गुराणि सुगन्धिना ।
रोमशैर्मृदुभिस्तीक्ष्णै + + पञ्चाङ्गुलीसमैः ॥ १७२ ॥
ज्ञेया बलवसा नाम विष्णुक्रान्तेति चापरे ।
सो द्रावयति लोहानि गृह्णात्य+भ्रकं च सा ॥ १७३ ॥
पीतरक्तासितश्यामा बहुवर्णस्तु पञ्चधा ।
रसस्तु रञ्जितो दृष्ट्वा रसानां योगतां बुधैः ॥ १७४ ॥
इन्द्रगोपकसङ्काशा तथा भ्रमरसन्निभा ।
शुकपत्रोपमा दिव्या शिखिकण्ठनिभा शुभा ॥ १७५ ॥
हरिद्रारसवर्णश्च जायते बीजभेदतः ।
रसोपरसयोगाश्च मूलीनां वर्णभेदतः ॥ १७६ ॥
अभ्रस्य चारणे चैव लोहानां जारणे तथा ।
बीजानां द्रावणाधिक्ये वर्णभेदं तु लक्षयेत् ॥ १७७ ॥
पञ्चमानां च वर्णानां यद्वर्णस्तु भवेद् रसः ।
रञ्जितस्तु स विज्ञेयो हेमयोनिश्च वेधकः ॥ १७८ ॥
जठरग्राहिकामूल्यः काश्चिच्छिखिशिखादयः ।
कृष्णवर्णं प्रकुर्वन्ति लोहाभ्ररसचारणात् ॥ १७९ ॥
ह्रीबेरचर्चिकाभ्यां तु गन्धहेमाभ्रचारणात् ।
पीतवर्णं प्रकुर्वन्ति तत्क्षणान्मूलिशक्तितः ॥ १८० ॥
रक्तकञ्चुकि रक्ता स्याद् रक्तपाटलिकादयः ।
रक्ताभ्रदरदं चीर्णं कुर्याद्गोपकसन्निभम् ॥ १८१ ॥
+ + + + + + + + राजावर्तं च सस्यकम् ।
श्यामाभ्रं च रसं चीर्णं हेमाभ्रं पीतकादिभिः ॥ १८२ ॥
भवेन्मरकतप्रख्यं सञ्चीर्णं सर्वमेकतः ।
सङ्करं सकलद्रव्यं बहुवर्णैर्निधापयेत् ॥ १८३ ॥
शिखिकण्ठनिभाकारो बहुवर्णो भवेद् रसः ।
तद्वर्णान्येव बीजानि द्रावयेद् रसषड्गुणम् ॥ १८४ ॥

---

१. 'ली' ख. पाठः. २. 'धात्ररस' क. पाठः.

ताम्रनागायसं वङ्गं चारितं मणिवर्गतः ।
भावनं क्षारमूत्रैस्तु दाशपाशनरञ्जनैः ॥ १८५ ॥
रसांश्चोपरसांश्चैव रुधिराक्तविन्दुन च ।
निषाश्वस्तस्यै मूत्रेण शोधितं चूर्णितं पुनः ॥ १८६ ॥
रसकेनोपयुक्तं तु तच्चूर्णं ग्मरञ्जनम् ।
द्रावणं हेमबीजस्य वेधनैव विशिष्यते ॥ १८७ ॥
लाङ्गली रक्तपुष्पश्च सरक्तकरवीरिका ।
रक्तचित्रकमूलं च पिष्ट्वा मूषां तु कारयेत् ॥ १८८ ॥
शोषयित्वा विषं लिप्त्वा तच्चूर्णं प्रक्षिपेत् ततः ।
बीजचूर्णरसं स्थाप्य तच्चूर्णमुपरि क्षिपेत् ॥ १८९ ॥
विषकल्केन संलिप्य दृढं सन्धीकृतं पुनः ।
एतन्नियामकैर्युक्तं गुञ्जालक्तकवेष्टितम् ॥ १९० ॥
कदलीपत्रैर्निधायैतद् वेष्टयेत् सूत्ररज्जुना ।
वेष्टयित्वा त्रिवस्त्रेण सूत्रेणावेष्ट्य बन्धयेत् ॥ १९१ ॥
स्थापयेल्लोहमूषायां कङ्कुतैलपरिप्लुतम् ।
वर्तिं प्रज्वालयेत् सम्यग् मेघध्वनिविवर्जिते ॥ १९२ ॥
दिवसे शुभनक्षत्रे मुसलध्वनिविवर्जिते ।
एवं प्रज्वलिते सूत्रे रञ्जितस्तु समद्रुतः ॥ १९३ ॥
विध्यात् ताम्रं च तारं च शतांशैर्हाटकं भवेत् ।
एतद्दीपविधानं स्याद् विस्तरेण विशेषतः ॥ १९४ ॥
अथवा रञ्जितैस्तैस्तु सूतकं च विधानतः ।
द्रावणं सर्वबीजानां कुर्याद् दीपं विधानतः ॥ १९५ ॥
अभ्रसत्वायसादीनां चीर्णजीर्णो यदा रसः ।
बीजेनातिद्रुतो येन तद्वर्णं लभते रसः ॥ १९६ ॥
अथवा कृष्टिशुल्बेन चारितं रसमेकतः ।
द्रावयेत् पातयेद्वापि यावद्वर्णविपर्ययः ॥ १९७ ॥

१. 'मा', २. 'वि', ३. 'न्य' ख. पाठः. ४. 'चा' क पाठः. ५. 'रज्यते ख. पाठः.

सूतबीजं यथाशक्त्या द्रावयित्वा प्रसारयेत् ।
पेषयेद्रक्तवर्गेवा लेपमिच्छेद्यथेष्टतः ॥ १९८ ॥
ग्राह्यं तु शुल्वपत्राणि लेपयेत् क्रामणैर्बुधः ।
निक्षिप्य स्थापयेदाशु त्रितरामकरात्रतः ॥ १९९ ॥
स्थापितं सूतकसमं श्लक्ष्णापिष्टं मुखाम्बुना ।
त्रिशूलीदन्तनिक्षुण्णं नवनीतसमं यदा ॥ २०० ॥
तत्पिण्डं सूतकरसे द्रातं मध्ये निधापयेत् ।
दत्त्वा दत्त्वा त्रिशूल्ये वा दन्तनिष्ठीवितं चरेत् ॥ २०१ ॥
अङ्गुष्ठमर्दनादस्य स्थापयेदातपे पुनः ।
द्रावयेद् दिनकरकरैस्तद्रसं चाग्निना विना ॥ २०२ ॥
समं वा द्विगुणं वापि तद्रसेन पुनश्चरेत् ।
पुनर्द्रुतं पुनश्चार्य रसवृद्धिं तु लक्षयेत् ॥ २०३ ॥
अथवा पातनायन्त्रे पातयेद् रसमूलिना ।
प्रच्छाद्य गोमयेनाग्नौ सुरायां स्वेदितो रसः ॥ २०४ ॥
हेमशुल्वेन वा योऽयं संचीर्णं चोद्धरेद् रसम् ।
एकीभूतं यदा तत्तु रसभागं निगच्छति ॥ २०५ ॥
तद्रसं बीजसहितं चारितं पिण्डितं स्थितम् ।
तत्पिण्डं तद्रसे क्षिप्रं चरेदङ्गुष्ठमर्दनात् ॥ २०६ ॥
त्रिनेत्रायुधनाम्ना तु मुखाम्बु च परिप्लुतम् ।
गन्धकासुरिहिशुनि (?)दत्त्वा चैवात्र मात्रया ॥ २०७ ॥
स्वेदितं चातपे तप्तं द्रवते रसतत्समम् ।
सारणासारितं बीजैर्वृद्धिमाप्नोति चाक्षयम् ॥ २०८ ॥
वेधयेत् तारताम्रेण यथोक्तं बीजकर्मणि ।
एतत्संक्षेपतः प्रोक्तं विस्तरं चात्र वक्ष्यते ॥ २०९ ॥
अभ्रसत्वं च हेमं च तारं वङ्गमथायसम् ।
शुल्बमारं च नागं च सर्वमन्धीकृतं द्रुतम् ॥ २१० ॥
विमलं तत्समं दत्त्वा कूर्पकाचविलेपितम् ।
निर्धमेत् तद्रसं तुत्थे श्लक्ष्णचूर्णं प्रकाशयेत् ॥ २११ ॥

तच्चूर्णं सूतकसमं चारयेन्नष्टविग्रहम् ।
एकीभूते रसे क्षिप्रं जारयेज्जारणाविधौ ॥ २१२ ॥

विषालुकस्य मूषायां निक्षिप्योपरि तद्रसम् ।
तच्चूर्णमेव प्रच्छाद्य तच्छेषं स्वकेन तु पुनः ॥ २१३ ॥

वस्त्रेण पोट्टलं बद्ध्वा लेपयित्वान्धमूषकेन ।
दहेद्धा गोमयेनाग्नौ इलान्तेन पाचयेत् ॥ २१४ ॥

रसस्याग्नौ बलं ज्ञात्वा गुञ्जाकल्केन वा दहेत् ।
समं षड्गुणमथापि चीर्णजीर्णो भवेद्रसः ॥ २१५ ॥

तद्रसं समबीजेन द्रावितं सारणाविधौ ।
ताम्रनागायसं वङ्गं मारितं मृद्वर्गतः ॥ २१६ ॥

लोहचूर्णमथ स्थाप्य विद्धं क्षिप्य चोपरि ।
रसेन्द्रं मध्यतः स्थाप्य लोहवर्गविधोपरि ॥ २१७ ॥

अन्धमूषाकृतं धान्तं यावद् द्रुतमशेषतः ।
मयूरग्रीवसदृशो रसो भवति निर्मलः ॥ २१८ ॥

पुनश्च सारितं बीजमेवमेव द्रवीकृतम् ।
त्रिगुणं षड्गुणं वापि सारितं प्रतिसारयेत् ॥ २१९ ॥

ताम्रताराररतीक्ष्णानि सहस्रांशेन वेधयेत् ।
वेधितं कनकं दिव्यं रसविद्धं निराकरम् ॥ २२० ॥

रससन्द्रावणं वक्ष्ये लोहानामभ्रकस्य च ।
यस्य संयोगतः सूतो रज्यते बध्यते महान् ॥ २२१ ॥

द्रावयेदक्षयं बद्धं प्राप्नुयात्सारतो बुधः ।
द्रावणं सुखतस्सिद्धिर्द्रावणस्तु महाबलम् ॥ २२२ ॥

तस्मात् कालक्रमेणोक्तं गुरुणास्यां समग्रतः ।
विधास्ये बन्धनं पूर्वं क्रामणं पूर्वमभ्रकम् ॥ २२३ ॥

मृताभ्रो दीक्षितो येन नन्द्यावर्ते पुनर्भवे ।
भावयेत् सर्वमूत्रैस्तु सर्वक्षारसुगालितैः ॥ २२४ ॥

---

१. 'तं', २. 'द्रि' ख. पाठः. ३. 'चा' क. पाठः. ४. 'न्यामम',
५. 'र्गी' ख. पाठः.

अपामार्गा तिला पाठा कदली कदलीहला।
क्षुद्रकामुष्ककं बाष्पं सर्वमेकगतं दहेत् ॥ २२५ ॥
सर्वग्राह्यद्रुतेनैव सप्तवारांस्तु भावयेत् ।
भावितं चाभ्रकरसं गोशृङ्गे सन्निधापयेत् ॥ २२६ ॥
अग्निजारुरसोन्मिश्रं तद्रसं प्रति कीलितम् ।
सन्न्यसेन्मासमात्रं तु कूर्पगोभयसञ्चिते ॥ २२७ ॥
तदुद्धृत्यातपे स्थाप्य लोद्भ्रपात्रे निधापयेत् ।
अलेपकस्त्वग्निसहः सूतकोपममक्षयम् ॥ २२८ ॥
स्वर्चिक्षारविडङ्गञ्च एकैकं सिन्धुपारतम् ।
त्रयस्तस्य + तद्रकौ भाग एकं रसान्वितम् ॥ २२९ ॥
षट् सौवर्चलमेकतस्तु चूर्णीकृतं काचभाजने (?) ।
मदिराम्लविषक्षारे भावयेद् वसुपित्तजैः ॥ २३० ॥
अग्निजारुरसेनापि जलशूकरसेन च ।
छेदनीयैरपि क्षारैः शतशः शतशः पुनः ॥ २३१ ॥
अलाभे चाग्निजारोस्तु भावयेदाम्लवेतसम् ।
यवचिञ्च्या रसेनापि चणकाम्लेन भावयेत् ॥ २३२ ॥
हिङ्गुत्रिकटुकं केशचूर्ण + + सटङ्कणम् ।
निर्वपेच्छृङ्गचूर्णं च द्रावणांशे नियोजयेत् ॥ २३३ ॥
एवं यद् द्रावितं चूर्णं लोहानां द्रावणं प्रति ।
गोशृङ्गे सन्निधातव्यं सुगुप्तं धूमसन्निधौ ॥ २३४ ॥
एतद्विद्धवरं नाम्ना द्रावणं घनचूर्णतः ।
लोहानां रसधातूनां संन्यासं सिद्धिरिष्यते[४] ॥ २३५ ॥
सुश्रृङ्गो मारितैर्लोहैः पुनरुज्जीवितैः सह ।
द्विगुणैर्विडभागैश्च सन्न्यसेच्छैलभाजने ॥ २३६ ॥
आम्लपित्तैश्च सम्पूर्य भूमौ संस्थापयेद् दृढम् ।
अग्निं प्रज्वालयेन्नित्यमजालण्डैश्च चोपरि ॥ २३७ ॥

---

१. 'गु' ख. पाठः. २. 'आ + लोह', ३. 'हे', ४. 'विधि' क. पाठः.

द्रवते मासमात्रेण नानावर्णः सुनिर्मलः ।
अभ्रकं द्रवते चैतत् सूतकस्य गतिक्रमः ॥ २३८ ॥

माक्षिकं विमलं गन्धं पारतं च भवेद् रसः ।
एवमेतेन विधिना द्रावितं सूतकेन तु ॥ २३९ ॥

खल्वपाषाणके स्थाप्य कार्पासरससंप्लुतम् ।
लोलयेन्निम्बकाष्ठेन सर्वमेकगतं धमेत् ॥ २४० ॥

मयूरगलकाभासो वज्रवैडूर्यरश्मिमान् ।
विद्धते सर्वलोहानि सहस्रांशेन तद्रसम् ॥ २४१ ॥

एतद्विद्धं भवेद् हेममक्षयं देवभूषणम् ।
रसविद्धमिति ख्यातो तारार्वैनाकरोद्भवम् ॥ २४२ ॥

द्रुतेषु सर्वलोहेषु मणिवर्गमशेषतः ।
प्रक्षिपेच्छैलभाण्डे तु विद्धं वापि विधानतः ॥ २४३ ॥

अम्लवर्गेण सञ्चार्य पांसुस्वेदो निधापयेत् ।
द्रवते मासमात्रेण नानावर्णो रसः शुभः ॥ २४४ ॥

एतद् गुह्यं रसेन्द्रस्य रञ्जनं परमं स्मृतम् ।
विषैर्घोरैः सहान्मिश्रं स्पर्शवेधिनमादिशेत् ॥ २४५ ॥

तीक्ष्णमेकादशगुणं शुल्वशुद्धं[1] च तत्समम् ।
तारं नागं तथा द्वे द्वे काञ्चनं हेमभागतः ॥ २४६ ॥

वङ्गं षड्गुणसंयुक्तं सूतकं द्विगुणं भवेत् ।
गन्धसैन्धवहिङ्गूनि टङ्कणं पञ्चपञ्चकम् ॥ २४७ ॥

सर्वमेतत् समाहृत्य समं सौवर्चलान्वितम् ।
भावयेद् द्रावणामूत्रे रक्तपीतैः सु(गु? गा)लितैः ॥ २४८ ॥

मदिरायां शतं भाव्यं जलशूकरसे पुनः ।
स्थापयेच्छैलपात्रे तु सापिधाने दृढे शुभे ॥ २४९ ॥

बीजपूररसं दत्त्वा सप्तरात्रोषितं पुनः ।
खादिरेणाश्मना वापि घट्टयित्वा पुनः पुनः ॥ २५० ॥

---

1. 'शुल्बं शुद्धं' क. पाठः.

अम्लवर्गेण सम्पूर्य पक्षमात्रं निधापयेत् ।
द्रवीभूतस्ततो दृष्ट्वा हेमेन सह योजयेत् ॥ २५१ ॥

शतांशेन तु तारेण विद्धमुत्तमतां व्रजेत् ।
दशांशेनैव हेमेन कल्याणं मातृकासमम् ॥ २५२ ॥

सूतकस्याभ्रचीर्णस्य लोहचीर्णस्य मध्यतः ।
रसोत्तरं पुनश्चार्य द्रावयेद् धूमकं परम् ॥ २५३ ॥

बीजद्रुते वाप्यन्ते च चारयित्वा रसोत्तमम् ।
लेपयेत् तारकाशेषं निर्बीजं रसतेजसा ॥ २५४ ॥

एतद्धि रसमुख्यं तु सामान्यं रसकर्मणि ।
चारयेज्जारयेदेतद् द्रावणे द्रावितान् क्षिपेत् ॥ २५५ ॥

एतद् गुह्यं यथोद्दिष्टं वेधकं रञ्जनं परम् ।
पूर्वमुक्तस्य शास्त्रस्य रसतन्त्रस्य चोत्तरम् ॥ २५६ ॥

स्वभावः शुक्लता सु + पटले च विशेषतः ।
तस्माद् वङ्गोत्थिते तारे मध्यमं सुकरं भवेत् ॥ २५७ ॥

केवलं हेमचीर्णेन सूतकेन रसोत्तरम् ।
विना वर्णविपर्यासान्न भवेत् तारताम्रयोः ॥ २५८ ॥

तस्माद् रसोत्तरं वक्ष्ये रञ्जनं पारतस्य तु ।
रसेषु रञ्जनं दृष्ट्वा न रक्तो नच रञ्जयेत् ॥ २५९ ॥

पारतं रसकं तुत्थं माक्षिकं विमलं तथा ।
पूर्वोक्तेन विधानेन शोधितान् भावितान् भृशम् ॥ २६० ॥

आम्लैः क्षारैश्च संभाव्य योजयेद् रसकर्मणि ।
रसोत्तरमिदं नाम्ना स्वयमेव तु रञ्जयेत् ॥ २६१ ॥

कासीसं गैरिकं काक्षी गन्धतालं मनश्शिला ।
पारतं स्वर्चिका चैव विमलाञ्जनभावितम् ॥ २६२ ॥

रञ्जनं क्षारवर्गैश्च तथा मधुघृतैः सह ।
एतद् बीजोत्तरं नाम रञ्जनेषु विधीयते ॥ २६३ ॥

गालयेत् सर्वसूत्रेषु दाशपाशनरञ्जने ।
क्षारद्रोणं पचेदेकमाढकं तु समाहरेत् ॥ २६४ ॥

पारतं गन्धपाषाणं रसकं रक्तसैन्धवम् ।
माक्षिकं सविषं काक्षी सर्वमेकगतं समम् ॥ २६५ ॥

पाचयेत् क्षारपाकेन दशवारं पुनः पुनः ।
दत्त्वा पाच्य तदुद्धृत्य भावयेद् दशवारतः ॥ २६६ ॥

अस्याम्लैश्च ततो भाव्यं गोशृङ्गे सन्निधापयेत् ।
तदुत्तरविधं नाम रञ्जने सविशेषतः ॥ २६७ ॥

द्रावयेद् द्रावणांशेन योजयेत विधानतः ।
चारणैर्जारणैर्युक्तं त्रिविधेऽपि विशिष्यते ॥ २६८ ॥

कङ्कुष्ठदन्तिनीद्राक्षाक्षारैरुपरसैः सह ।
यथालाभं च संपेष्य पश्चात्सोमा च संयुतम्(?) ॥ २६९ ॥

हेमतैलेषु रङ्गेषु दीपनागे विधीयते ।
द्रुतहेमसमप्रख्यं वेधकं रसमुत्तमम् ॥ २७० ॥

सुकरं रञ्जनं चास्य[1] रसराजस्य चोत्तरम् ।
वक्ष्ये नातिप्रयत्नेन तारेण सह वेधकम् ॥ २७१ ॥

ताम्रं नागायतं[2] वङ्गं मारितं रञ्जितं रसे ।
तारेण सह सन्द्राव्य निर्वहेत्[3] तारशेषितम् ॥ २७२ ॥

पुनस्तु सह संयोज्य कारयेदेवमेव तु ।
दापयेत् तीक्ष्णमाक्षीकं यावद्रक्तं भविष्यति ॥ २७३ ॥

रञ्जितं तद् द्रवीकृत्वा वेधकेन रसेन तु ।
वापितं जतुवापेन तच्चूर्णं शतशो भवेत् ॥ २७४ ॥

रसोत्तरेण संयोज्य रञ्जयित्वा यथाविधि ।
दीपयन्त्रेण यत्नेन वर्तिं प्रज्ज्वालयेद् दृढम् ॥ २७५ ॥

रञ्जितं तु रसं दृष्ट्वा शशशोणितसप्रभम् ।
वेधकं तारताम्रेषु शतांशे हाटकं भवेत् ॥ २७६ ॥

---

१. 'न्यद्', २. 'सं' ख. पाठः. ३. 'निर्वृत्ताशेषितं पुनः' क. पाठः.

अथवा तुत्थलेपेन वङ्गनागायसादिना ।
रसोत्तरविधेनापि लोहचूर्णं रसं कुरु ॥ २७७ ॥

धामयेदन्धमूषायां धामकेन रसैः सह ।
निर्धान्तमिन्द्रगोपाभं तारताम्रे शतांशके ॥ २७८ ॥

वेधयेद् वेधकसमं हेमं दत्त्वा सुशीतले ।
स्थापितं सप्तरात्रं तु वर्धनं मातृकोत्तरम् ॥ २७९ ॥

वङ्गनागायसैस्ताम्रैः सुरसैः[2] समभागिकैः ।
भागमेकं सुवर्णः स्यादेतदेकगतं भवेत् ॥ २८० ॥

समं वा द्विगुणं वापि तारे निर्वाहयेच्छनैः ।
विधोत्तरं सकृत् स्थाप्य नवनीते निषेचयेत् ॥ २८१ ॥

हेमभागस्थितं तारं वेधकेन रसेन तु ।
लेपितं वापितं वापि निर्बीजं रसतेजसा ॥ २८२ ॥

स्थापितं शीतले मासं पक्षं वापि यथेष्टतः ।
[3]पक्षन्यासस्तु विधिना वर्धते वर्णतो भृशम् ॥ २८३ ॥

त्रिसीसाधिगतं शुल्बं तीक्ष्णेन समरञ्जितम् ।
वङ्गवादं निषिक्तं तु निषिक्तं रञ्जनं भवेत् ॥ २८४ ॥

तत्तारेण तृतीयांशं योजितं तारशेषितम् ।
लोहिताक्षरसं वाप्य कङ्गुतैले निषेचयेत् ॥ २८५ ॥

वेधने पारतीयस्य तारं क्षेत्रीकृतं भवेत् ।
एतद्बीजनिबद्धस्य क्षेत्रशुद्धिर्भविष्यति ॥ २८६ ॥

अयःप्रकाशारपलद्विकत्रिकं नवैव शुल्बं मृदुना त्रिपञ्चकम् ।
तमर्धमर्धं तपनीयसप्रभं क्षिपेत कृष्टिं बहलेन पूजिताम् ॥ २८७ ॥

+ कृष्टिभागत्रिगुणेऽपि ताप्यं क्रियेत कृष्टिं रविभागसंस्थिताम् ।
तत्तारहेम्नोऽपि रसाङ्गतुल्यं तारं च हेमं च सुरञ्जितं वा ॥ २८८ ॥

ताम्रं तारं च नागं च नागतुल्यं रवे स्थितम् ।
तारं वा बीजसंरञ्जैर्द्वैष्णवेन नियोजितम् ॥ २८९ ॥

---

१. 'छन्नं', २. 'क्तैः', ३. 'पप्रन्यासत्त्वंवि' ख. पाठः.

शैलं कान्तं च तीक्ष्णं च हरितालं मनश्शिला ।
माक्षिकं गन्धकं वापि सूतकं रञ्जनं तथा ॥ २९० ॥

लाङ्गलीकारकफलं गुञ्जाबीजं वनार्जुनम् ।
एतेषां भागमेकैकं नृमांसं जारुणासमम् ॥ २९१ ॥

चूर्णं कृत्वा क्षिपेत् पात्रे नरमूत्रेण संयुतम् ।
षण्मासं स्थापयेद् भूमौ मूत्रस्थाने विशेषतः ॥ २९२ ॥

तदुद्धृत्य मृदा लिप्त्वा दहेद् गोमयवह्निना ।
त + + वङ्गमावर्त्य + + षेतशतांशकम् ॥ २९३ ॥

तद्वङ्गमेकं ताम्रेण शतांशे रजतं भवेत् ।
शतांशेनैव तारेण संयुक्तं निस्तमं भवेत् ॥ २९४ ॥

हेमेन वङ्गजेनेव नागं विद्धं रसोत्तमम् ।
कुर्यात्तु तारताम्रे च हाटकं देवभूषणम् ॥ २९५ ॥

सोमजा(ः) सूर्यजाश्चैव द्विविधा जारवः स्मृताः ।
तेषां सूर्योद्भवं श्रेष्ठमग्निना तुल्यवर्चसम् ॥ २९६ ॥

प्राणिजो रसपिण्डोऽयं प्राणिवत्सागरे ज्वलेत् ।
अग्निजारुरिति ख्यातः स्पर्शवेधी रसो भवेत् ॥ २९७ ॥

तद्रसं स्पर्शमात्रेण दहेद्धस्तेन मानवम् ।
तस्मान्न स्पर्शनाद् ग्राह्यं यल्लभेत् पापसंक्षये ॥ २९८ ॥

हिङ्गुत्रिकटुकं चैव करञ्जं सर्षपैः सह ।
त्रिफलाकल्कसहितं द्रावयेदविशङ्कितः ॥ २९९ ॥

ताम्रतारमथारं च द्रावयित्वा रसे क्षिपेत् ।
ततो वापितमात्रेण निर्बीजं रसतेजसा ॥ ३०० ॥

अतोऽन्येऽन्तरजातीयाः स्पर्शनास्पर्शनात्मकाः ।
द्रावणाद् रसवर्गाणां प्रतिबध्नन्ति रञ्जनम् ॥ ३०१ ।

रसभावं मुरुच्येत रसोपरसवर्गतः ।
द्रावकः सर्वलोहानामभ्रकस्य विशेषतः ॥ ३०२ ॥

रसोपरसवर्गाणां प्रकुर्यादुक्तमार्गतः ।
नागस्तु पाशने योज्यो वङ्गं देयं तु दाशने ॥ ३०३ ॥
रञ्जने चीमरं श्रेष्ठं स्ववर्गेषु नियोजितः ।
पाशने भावयेन्नागं गन्धगैरिकसंयुतम् ॥ ३०४ ॥
दाशने भावयेद्वङ्गं हरितालेन संयुतम् ।
रञ्जने भावयेत् तीक्ष्णं शिलादरदतुत्थकैः ॥ ३०५ ॥
वर्गे वर्गे नियोज्यैवं नितरां रक्तसैन्धवम् ।
यथालाभं ततः क्षारैर्दाशपाशनरञ्जितैः ॥ ३०६ ॥
गालितैः सर्वमूत्रैस्तु सर्वाम्लैश्च सुसंयुतम् ।
तोयं संभाव्य बहुशश्चूर्णमेतद्विधानतः ॥ ३०७ ॥
गृह्णीयात् त्रिगुणं चूर्णं[1] दाशपाशनरञ्जनम् ।
अभ्रस्य चारणं चैव अष्टांशं पूर्वचूर्णतः ॥ ३०८ ॥
रञ्जने दीपिकायां तु द्रावणे च विशेषतः ।
नागेन शुध्यते सूतो नागेन क्रमते भृशम् ॥ ३०९ ॥
दोषनिर्घातने नागो दाशपाशनरञ्जने ।
सारवान् रसलोहैश्च ताम्रतारौ च शैलजम् ॥ ३१० ॥
वैक्रान्तको रसेन्द्रोऽपि नागेनैव विशुध्यते ।
त्रिनागपरिशुद्धो वा नवनागविनिर्गतः ॥ ३११ ॥
चतुर्भिः सहजैर्दोषैः प्रक्षीणः करणे क्षमः ।
शोधितं रञ्जितं नागं रसैरुपरसैः सह ॥ ३१२ ॥
चारयित्वा रसेन्द्रेण नाडीयन्त्रेण पातयेत् ।
सुरायां पातनाख्यायां बन्धनायां पुनः पुनः ॥ ३१३ ॥
नागशुद्धं रसं ज्ञात्वा पुनर्नागं प्रदापयेत् ।
एवं त्रिपञ्चदशभिर्नागशुद्धो रसोत्तमः ॥ ३१४ ॥
कालिकाखेहरहितो नागाक्रिमको भवेत् ।
एवं संशोधितं + + चारयेदभ्रकं रसम् ॥ ३१५ ॥

---

१. 'पूर्वं' ख. पाठः.

पटलान्येव संवक्ष्ये जठरग्राहमूलिना ।
जलूकाखण्डशो ग्राह्यं पिण्डग्राहमथापि वा ॥ ३१६ ॥

चारयित्वा जरद्दुष्णे जारणौषधिभिर्भृशम् ।
स्थापयेन्नाडिकायन्त्रे लेपयित्वा विडेन तु ॥ ३१७ ॥

कालेनाल्पेन यत्नेन षड्गुणान्तं भविष्यति ।
तद्रसं ताम्रभागेन चारयेन्मूलिभिः सह ॥ ३१८ ॥

पातयेन्नाडिकायन्त्रे सममर्धं सशक्तितः ।
चतुर्णामपि बीजानां सङ्करद्विकमेकतः ॥ ३१९ ॥

पादांशेन रसं चार्यं द्रावयेद् द्रवमूलिना ।
दीपयन्त्रस्थितं वापि वापितं चान्धमूषया ॥ ३२० ॥

निर्वमेद् रञ्जयेल्लोहैर्द्रावणेन विडेन च ।
एवं सन्द्रावितं बीजं रञ्जितं रसकादिभिः ॥ ३२१ ॥

सारितं समबीजेन वेधनं ताम्रतारयोः ।
एतद्रहस्यमुद्दिष्टं रसदोषनिकृन्तनम् ॥ ३२२ ॥

नाशुद्धो रञ्जनग्राही नाशुद्धश्चारणे क्षमः ।
कूर्पणौषधिभिर्वापि शोधनं सूतकस्य तु ॥ ३२३ ॥

दुष्करं नाम संग्राह्योऽसुकरं पातनो भवेत् ।
तीक्ष्णं वङ्गं च नागाह्वं शुल्बमारं सुमारितम् ॥ ३२४ ॥

भागोत्तरविवृद्ध्या तु निर्वहेदन्धमूषितम् ।
समं च द्विगुणं वापि चारे वा विंशदंशके ॥ ३२५ ॥

हेमैकयुक्तं संशुद्धं कल्कतैले निषेचितम् ।
वेधयेद् रसराजेन वापितं लिप्तमन्धितम् ॥ ३२६ ॥

रसस्य वेधकं ज्ञात्वा पुनर्हेमं प्रदापयेत् ।
एतद् गर्भक्रियायोग्यं पारतीयस्य वेधने ॥ ३२७ ॥

रसे नाना दुर्लभानां क्षेत्रीकरणमिष्यते ।
शोधितं रञ्जितं मुख्यैः सातुद्रैः केतकीफलैः ॥ ३२८ ॥

अन्येनापि विधानेन कृतं शुल्बं समानयेत् ।
रसमभ्रकसंचीर्णं ताम्रपत्राणि लेपयेत् ॥ ३२९ ॥

---

१. 'पातये, २. 'रञ्जनैर्लौ', ३. 'कङ्कु' ख. पाठः.

कदल्याश्च रसेनापि त्रिशूलीर्वन्दनारसे ।
स्थापितं तु त्रिरात्रं तु खल्वे चैवान्धमूषितम् ॥ ३३० ॥
द्रावितं तारभागेन पञ्चमेनाष्टमेन वा ।
योजितं सविषघ्नास्तु त्रिशूल्याः स्वरसे क्षिपेत् ॥ ३३१ ॥
तच्छुल्वं जायते हेममित्येतच्छाङ्करं मतम् ।
+ + + + + + नैव यावन्निर्मलतां व्रजेत् ॥ ३३२ ॥
तत्तारसदृशं वर्णे निघृष्टं कनकोपमम् ।
एतद् गर्भं यथोद्दिष्टं रसस्य स्थूलवेधकः ॥ ३३३ ॥
विज्ञाय मतिमान्मात्रां हेमभागं प्रदापयेत् ।
सुरक्तपीतपुष्पाणां मूलीनां पञ्चजातिनाम् (?) ॥ ३३४ ॥
बीजानाहृत्य सम्पूर्य गोक्षीरेणाविकेन वा ।
लोलितं ह्युषितं रात्रावाम्लवर्गेण मात्रया ॥ ३३५ ॥
एतत्तु मथितं सम्यग् नवनीतमथोत्तरे ।
द्रावितं वङ्कनाले तु स्थापयेद् रसकं परम् ॥ ३३६ ॥
एतन्निष्पीडितानां तु तैलेन द्रवता विडम् ।
रञ्जयेत् तारताम्रं तु निषिञ्चेत् तैलमुत्तमम् ॥ ३३७ ॥
उत्कर्षयति श्वेतं हेमनष्टं क्रियान्तरात् (?)।
स्तब्धानां मार्दवकरं बीजानां च मलापहम् ॥ ३३८ ॥
भृताभ्रं जनयेच्चूर्णं विषतैलेन पट्टके ।
सप्तभागे समाहृत्य वङ्गेनार्धपलेन तु ॥ ३३९ ॥
पलावशेषितं वङ्गं पुनरभ्रस्य सप्तके ।
वङ्गभागाष्टमं क्षिप्त्वा क्षपयेत्तत् पलाधिकम् ॥ ३४० ॥
दशभागं स्थिरं वङ्गं पूर्ववत् सङ्क्रमान्तरात् ।
लाक्षाचूर्णनिवापेन वापयित्वा पुनः पुनः ॥ ३४१ ॥
निर्वहेत् तारभागेन दशभिर्वङ्गजैः समैः ।
वापयेत् तारसङ्काशं निर्मलं वङ्गशुद्धये ॥ ३४२ ॥

---

१. 'चन्द', २. 'वें', ३. 'रजतं', ४. 'नव', ५. 'मृ', ६. 'भञ्जये' ७. 'चट्टुके'. ८. 'शनैः' स. पाठः.

हेमं हेमनिभं कुर्याद् रसकं वा विशेषतः ।
दशसङ्करनिर्मुक्तः रम्यो वङ्गजो महान् ॥ ३४३ ॥
चत्वारि पारतं क्षिप्रं क्रामयेत् पत्रलेपनात् ।
तद्बीजं पारतस्यं पादं दत्त्वा तु चारयेत् ॥ ३४४ ॥
द्रावयेत् तत्र शुल्विन्या स्वर्णेषु नियामतः ।
चीर्णजीर्णो रसो रञ्जयेज्ज्वलदग्निसन्निभः ॥ ३४५ ॥
वेधयेत् तारताम्रेण शुल्बादिकेन वा ।
एकहेमेन संयुक्तं देवाभरणसत्तमम् ॥ ३४६ ॥
*भेकन्दमीनाग्निशिखा शिखाह्व दग्ध्याखुबाणककमूल(?) ।
जराग्निवर्णिकान्ताहिमार(?)टकणगञ्जिका ।
यामपोग्रदेव्या बलिवन्दनाख्या ॥ ३४७ ॥
एवमादीनि मूलानि स्वरसं पूरयेद् रसे ।
लोहपिण्डं रसं मूलं ताप्य ताप्य जले क्षिपेत् ॥ ३४८ ॥
जले चानुक्रमेणैव सन्तप्तं च पुनः पुनः ।
शतं शतगुणं विद्धि क्रमेणैव तु वापयेत् ॥ ३४९ ॥
तमोघ्नं चाग्निसह्यं च चारणाक्षयनिश्चयः ।
एवं च संस्कृतं सूतमभ्रकं चारयेत् क्रमात् ॥ ३५० ॥
नागात् स्नेहं बलं वङ्गं लोहाद् रागं प्रवर्तते ।
शुल्बात् स्नेहश्च रागश्च चत्वारो लोहमातृका(ः) ॥ ३५१ ॥
चीवरस्तीव्रशक्तिः स्यान्नागाद् बृंहणमुच्यते ।
तस्मात् तीक्ष्णं च नागं च बलवाँल्लोह उच्यते ॥ ३५२ ॥
दशभागस्थितं वङ्गं विंशद्भागस्थितोरगः ।
अर्धशुद्धस्थितं वापि पादस्थं चीमरांशिकम् ॥ ३५३ ॥
एवं सारस्थितं लोहं मारितं रञ्जितं शुभम् ।
एकैकं सङ्करं चापि चीर्णजीर्णेति षड्गुणः ॥ ३५४ ॥
कान्तोद्धृत्यात्सुवर्णं त्रिभिरपि दरदं माक्षिकं चापि तद्व-
च्छुल्वं तुल्यं मुनीनां वरतनुरचितं पञ्चभागं च नागम् ।

---

१. 'शतशः पु' ख. पाठः.

---

* इत आरभ्य पङ्क्तित्रयमेकं पद्यं प्रतिभाति ।

एतत्तुत्थागतं स्याद्ध्रुतवह्नजनितं लोकपालावशेषं
भूयो भूयोऽपि कुर्याद् दशदशगुणितं कोटिमप्येष विध्यात् ॥३५५॥

श्वामार्जारकुलीरभासकृकलैर्[1]दुग्धैश्शशस्यास्थिभि-
र्लाक्षामेषविषाणटङ्कणयुतं[2]स्त्रीस्तन्यगुञ्जान्वितैः ।
हेमाभ्रं रजताभ्रकं सकनकं ताप्योपलान्वं कृतं
ये चान्येऽपि न यान्ति मूकविहितास्तेषामयं मेलकः ॥ ३५६ ॥

माक्षीकं सविषं नरस्य रुधिरं कार्ष्णं मलं माहिषं
लाक्षाविण्मधुसिक्थकङ्कुकुनटीस्त्रीस्तन्यपारावतम् ।
भूमौ ये च रसोत्तमा(ः) स्थलगता ये चापि संयोगजा-
स्तेषां क्रामणमेष चाप्रतिहतो वज्रं यथा वज्रिणः ॥ ३५७ ॥

अयस्कान्तं विषं तैलं रसकं चूर्णपारतम् ।
रुधिरं चेन्द्रगोपं च रसक्रामणमुत्तमम् ॥ ३५८ ॥

त्रिचीमरविनिष्क्रान्तं नागं वङ्गं तथैव च ।
घोषाकृष्टिरियं नाम्ना माक्षिकेन सुरञ्जिता ॥ ३५९ ॥

अत ऊर्ध्वं प्रवक्ष्यामि शृङ्खलाकरणं शुभम् ।
निर्मुखं समुखं चापि द्विविधं चारणं क्रमात् ॥ ३६० ॥

अति[3]गन्धितमाकाशमा[4]क्षिटङ्कणपारतम् ।
अभिसन्धितसन्धानं त्रिविधं चारणं पुनः ॥ ३६१ ॥

अभ्रसत्त्वं च वङ्गं च विमलेन सटङ्कणम् ।
धामितं चान्धमूषायां वङ्गत्रिकमिहोच्यते ॥ ३६२ ॥

अभ्रसत्वं च नागं च नागत्रिकमिहोच्यते ।
अभ्रसत्वं च तीक्ष्णं च तीक्ष्णत्रिकमिहोच्यते ॥ ३६३ ॥

अभ्रसत्वं च शुल्बं च शुल्बत्रिकमिहोच्यते ।
अभ्रसत्वं च आरं च आरत्रिकमिहोच्यते ॥ ३६४ ॥

अभ्रसत्वं च तारं च तारत्रिकमिहोच्यते ।
अभ्रसत्वं च हेमं च हेमत्रिकमिहोच्यते ॥ ३६५ ॥

---

१. 'र्दु' ख. पाठः. २. 'तं रस्त्रीस्तस्य गु' क. पाठः. ३. 'हि', ४. 'महिषी-टङ्कपा' ख. पाठः.

अभ्रसत्वं च कान्तं च विमलं [illegible] ।
वापितं [illegible] ॥ ३६६ ॥

एवं शृङ्खलिका जाता एकैकं चापि [illegible] बुधः ।
यावत्तद्गुणमर्वाणि [illegible] ॥ ३६७ ॥

[illegible] व्योम [illegible] ।
[illegible] च ॥ ३६८ ॥

कदलीकन्द[illegible] भावयेच्छतधा तथा ।
कोशातक्या रसे भाव्यं चित्रकाद्रिरसेन च ॥ ३६९ ॥

गोक्षीर[illegible]चूर्णशर्करैः ।
करमाल्यैश्च सम्पिष्टा भावितं [illegible]तथा ॥ ३७० ॥

श्वमांसे चास्थिचुक्के वा सन्धयेत्स्मासमेकतः ।
सौम्यं पादतले यन्त्रे लोहं पतति निर्मलम् ॥ ३७१ ॥

एवं त्रिपातितं कृत्वा यावत्सत्वं विमुञ्चति ।
मारितं व्योमचूर्णं तु रञ्जितं भावितं पुटैः ॥ ३७२ ॥

क्षारादिकं च मत्स्याद्यैर्मत्स्यैश्चापि पुनः पुनः ।
+ - - - - + - - - हेमतैलेन भर्जयेत् ॥ ३७३ ॥

+ पश्चाद्रावणेन - - - - तैलमेव च ।
टङ्कणेन च मुक्तेन वज्रमूषासु निर्धमेत् ॥ ३७४ ॥

पतितं तु महासत्त्वं हेमवर्णं मृदूत्तमम् ।
रञ्जनाद्धि रसं लिप्य धामितं स्वाङ्गशीतलम् ॥ ३७५ ॥

लेपितं चान्वितं भूयो त्रिवाराणि पुनः पुनः ।
चीर्णमात्रो रसो रज्यो नश्यते क्षिप्रमग्निना ॥ ३७६ ॥

वल्लीकरञ्जमूलं च टङ्कणाम्लविमिश्रितम् ।
संस्वेद्य रसराजानं दिवसे च पुनः पुनः ॥ ३७७ ॥

शिलया निहत्य नागं तेन हन्याच्च हाटकम् ।
तच्चार्य सूतकं तुल्यं तत्तुल्यो विमलो रसः ॥ ३७८ ॥

---

१. 'यु', २. 'धा', ३. 'गृह्य' ख. पाठः.

शिखिपित्तेन समालोड्य बीजपूररसेन च ।
हेमतैलेन संयोज्य तीक्ष्णेनैवान्धमूषया ॥ ३७९ ॥
त्रिदिनं स्वेदितं कुर्याच्चतुर्थेऽहनि धामयेत् ।
तीक्ष्णाच्च नागं संशुद्धं बीजं तत्स्येह शोभनम् ॥ ३८० ॥
तारस्याष्टांशविद्धेन हेमभागेन संयुतम् ।
मातृकासमतुल्येन कुर्याद्दारिद्र्यनाशिनी ॥ ३८१ ॥
हेमाभ्रकं च संशुद्धं मृतं वज्रीरसप्लुतम् ।
विपचेत् पुटपाकेन सप्तरात्रं विधानतः ॥ ३८२ ॥
शिरोरुहाभ्रचूर्णं च वङ्गं कङ्कुष्ठतालकम् ।
प्रस्तरेन्मूकमूषायां सप्तवारान् विलापयेत् ॥ ३८३ ॥
चतुर्गुणं तु तच्चूर्णं हेम्नि निर्वाहयेच्छनैः ।
शोधितस्य रसेन्द्रस्य भोजनं तु प्रदापयेत् ॥ ३८४ ॥
तद्भुक्ते[1] + यदा सूतो[2] रञ्जयेच्च यथाक्रमम् ।
पादचीर्णो मधुयुतो पादे वा भूतले स्थितम् ॥ ३८५ ॥
जम्बूफलसवर्णाभो जायते नात्र संशयः ।
तारं ताम्रं च हेमं च लेपयित्वा तु भूतले ॥ ३८६ ॥
प्रक्षिपेन्मूकमूषायां प्रकाशे मातृकासमम् ।
मार्जारपादी रससप्तपीतं स्विन्नं दिनार्धं तु सुगन्धचूर्णम् ।
तच्चारयेत् कण्टकरञ्जितायां[3] रसेन सूतं खलु खल्वमध्ये ॥ ३८७ ॥
सुवायसीकन्दगुहां प्रविष्टो भूम्यन्तरं[4] वा त्रिफलाम्बुसिक्तम् ।
क्षाराम्बुस्विन्नश्च दिनैश्चतुर्भिर्भूयो भवेदग्निसहो घनश्च ॥ ३८८ ॥
घनेन हेम्ना स तु वेष्टिताङ्गो नागेन चैव त्रिगुणेन सम्यक् ।
अयःस्थितस्तैलहुताशमध्ये भवेत् स नागः शतकृष्टिवेधी ॥ ३८९ ॥
तत्तारमुक्तं पुटदग्ध[5]शुल्वं रक्तेन वर्गेण तु योजयीत ।
हेम्नश्च षष्ठांशयुतश्च(न्तु ?) तस्य हेमं भवेत् पक्वकुरण्टकाभम्[6] ॥ ३९० ॥
तत्कृष्टिगर्भो निहितः पृथिव्यां महारसः सप्तदिनानि सुप्तः ।
हेमेन विंशांशयुतश्रुतं तु हेमं भवेद् बालदिवाकराभम् ॥ ३९१ ॥

१. 'भुक्तेत', २. 'तं.', ३. 'या र', ४. 'भूयान्तरस्था', ५. 'ग्ध', ६. 'भ्रम्' ख, पाठः.

*कंफंतरोरिशफवल्कलत्वारिणा प्लावितया चहुशरिशलयोरगम् ।
समवलिप्य निहत्य च चारयेद् रसवरं कफपादपत्वारिणा ॥ ३९२ ॥

सामुद्रसौवर्चलरोमकाख्या गव्यं च पञ्चलवणानि समानि कुर्यात् ।
क्षारैः स्रुतैर्हुतवहोपरि चारितानि देयं विडं त्वथ मनश्शिलया विमिश्रम् ॥

अङ्कोलपूतितरुशिग्रुकषायधौतं रम्भातले ह्यजपुटे सविधे निधाय ।
डोलाख्ययन्त्रविधिना त्रिगुणाभितीर्णा पश्चात् पवित्रचरणो रसमाशयेत ॥

ताम्रस्य पत्रं त्वमलं त्वथ साधिवेधः सूतात्वन्यचणकेतकिशारिबाणान् ।
निष्ठीवनेन परिमर्द्य विलिख्य पश्चात् स्वप्नेन सूतकरसेन ततो निधाय ॥

नरजलपरिषिक्तं मूत्रदेशे त्रिरात्रं निहितमथ समुद्धृत्य भावयेल्लेपयेच्च ।
त्रिभिरपि विहितं चैतद्यच्च सोस्यान्धगशिं मितमपि ++ दातुं काञ्चनं च तृती-
[यम् ॥३९६॥

अजमूत्रे धरणिकदम्बकानां सुरानुबन्धाय भुजङ्गमं वपेत् ।
फलानि पञ्चद्विगुणं च विंशद्रसस्य मुक्तं नवभिस्तु माषकैः ॥ ३९७ ॥

मनश्शिलाहिङ्गुलिकाभ्रचूर्णं दशैव भागा इयमारभाविताः ।
तदेकविंशं सुरया सुभूयस्ततस्तु पश्चाद् रसचारणं भवेत् ॥ ३९८ ॥

त्रिवर्णिकन्दाश्च सहाम्लजं रसं ततस्तु निष्पीड्य तमायसे क्षिपेत् ।
प्रज्वाल्य मन्देन च वैणवाग्नौ सञ्चूर्णितं चूर्णवरं तु चारयेत् ॥ ३९९ ॥

कुमारिपत्राणि मृदूनि पेष्य कङ्कुष्ठमूलापटुराजिभिस्समाम् ।
तदूषैरेरण्डदलावभावितं रसस्य तज्जारितमाहुराम्लजैः ॥ ४०० ॥

ततस्तु पश्चात्प्रविचार्य जार्यं शरावपात्रेऽपि च दीपिको वा ।
विडेन युक्तं कमलाग्निमध्ये पुनश्चरेल्लोहगणानि चार्यं ॥ ४०१ ॥

त्रिधा विभज्येत तदेव पन्नगं सकृन्तशुल्वं त्रिगुणं तु वा भवेत् ।
वदन्ति तज्ज्ञा रसराजकर्मणि प्रधानबीजस्य च शोध(ये ? ने)यम् ॥

अय ++ लद्विककं ++++ नवैव शुल्वं मृदुना त्रिपञ्चकम् ।
तमर्धमर्धं तपनीयसप्रभं क्षेपेत क्रुष्टिं शिवलोकपूजितम् ॥ ४०३ ॥

१. 'कथं', २. 'त्सखारि', ३. 'समं च लि', ४. 'प्रपाक' क. पाठः. ५. 'दिं', ६. 'वाहय', ७. 'तुम' ख. पाठः.

* कथमित्यारभ्य वपेदित्यन्तं पद्यानि समीकार्याणि ।

खुराश्च कूर्पं लवणं च सैन्धवं सदेवदाली गुडका च सर्षपा ।
पुनश्च रक्तं चटकाण्डपोतवित्कपालखण्ड++++++++ ॥ ४०४ ॥
क्षारैश्च मूत्रैः क्रमशश्च वित्तैर्भाव्यं सुराम्लैर्बहुशश्च सोष्णैः ।
क्षयेत कालेऽपि घृतप्रयुक्तं क्षयेत कृष्टिं शतिवापितैरिमैः ॥ ४०५ ॥
सुरानिषेका नवशः पुनः पुनस्तमर्धमर्धं तपनीयसप्रभम् ।
++++++तानि चतुः++स्निग्शृङ्खला ॥ ४०६ ॥
एतत् सूतकसञ्चूर्णं पातयेच्च पुनः पुनः ।
समो वा द्विगुणो वापि यथाशक्त्या तु चारयेत् ॥ ४०७ ॥
सुशुद्धशुल्वं सुगुणं मुनीनां चतुर्थचामीकरपादसंयुतम् ।
पुटेन पक्वं द्विगुणं नवेन वा भवन्ति सूर्योदयमण्डलप्रभम् ॥ ४०८ ॥
बीजेन चार्यं रसपादयुक्तं ततस्तु दीपाद् रसमाशु रज्यते ।
मयूरपारावतकण्ठतुल्यं रसं च दृष्ट्वा पुनरेव सारणा ॥ ४०९ ॥
+++++++++++++दयःप्रभं तारसमं नियोजयेत् ।
मेषस्य शृङ्गं ज्वलनप्रदग्धं विमिश्रितं काञ्चनगैरिकेन ॥ ४१० ॥
मलेन सार्धं सह टङ्कणेन काक्ष्या युतं (कुनटि?)माक्षिकमिश्रितं च ।
बस्तस्य मूत्रैः शतशो विभाव्य विशोषितैरेव विनातपेन ॥ ४११ ॥
एतद्विचूर्णं समतारपिष्टे सद्वापितं पञ्चदशैव वारान् ।
तक्रे निषिक्तं रजनीद्वयेन करोति तारं कनकारुणां च ॥ ४१२ ॥
तत्रान्वतारे च रसेन लिप्य विशोष्य पश्चाद् रविरश्मितापे ।
निधाय तत् सप्तदिनानि भूतले ततोद्धृतं हेमशतांशयुक्तम् ॥ ४१३ ॥
करोति जाम्बूनदमुज्ज्वलाभं निरत्ययं सिद्धमिदं तु निश्चयम् ।
कदल्यपामार्गयुतैस्तथा ब्रह्मेन्द्रमोक्षकैः ।
पलाशकुरवीरार्कक्षुद्रकेक्षुरकैस्तिलैः ॥ ४१४ ॥
सिद्धार्थमुक्तैर्दुग्धैश्च बहुमूत्रसुगालितैः ।
क्षीरैरूपरसं स्राव्यं हंसपाकेन पाचयेत् ॥ ४१५ ॥
विडेन संयुतं पश्चाज्जारणार्थे नियोजयेत् ।
अजाक्षीरेण सव्योमैस्तण्डुलैः पायसं कृतम् ॥ ४१६ ॥

---

१. 'द्विगु', २. 'दे' ख. पाठः.

भक्षं विधाय मांसैस्तु शुनाहारं तु तस्य तत् ।
साम्यं किट्टगलस्नेहखदिराङ्गारसंयुतम् ॥ ४१७ ॥
धाम्येत कोष्ठके तज्ज्ञैर्वटकाकृतिशोषितम् ।
पातयेदभ्रलोहं तु मृदुनिर्मलितो भवेत् ॥ ४१८ ॥
माक्षिकस्य पलं तद्वत् तालकार्धपलं तथा ।
काक्षिकासीसयोश्चैव द्वयमर्धपलं पलम् ॥ ४१९ ॥
सैन्धवस्य च चत्वारि स्वर्चिकापलपञ्चकम् ।
गन्धोपलपलान्यष्टौ सौवर्चलपलं दश ॥ ४२० ॥
भावयेत् क्षारमूत्रैस्तु चारणामर्दिरैः सह ।
पुनश्शतं च विंशकं बीजपूररसेन च ॥ ४२१ ॥
एषोत्तरविडं नाम गोश्रृङ्गे धूमसन्निधौ ।
वापेन लेपनं कुर्यात् मन्त्र्यासकरणा विदुः ॥ ४२२ ॥
कुर्वन्ति सर्वलोहानि यच्चान्यदपि सद्रवम् ।
हस्तेन न स्पृशेत् तन्तु स्पृशेदग्निसमो भवेत् ॥ ४२३ ॥
तिलागुडारुष्करारकदलीयवसर्षपा ।
रक्तमाषक इत्येतान् दग्ध्वा तत्क्षारमात्रकम् ॥ ४२४ ॥
तद्वच्च मुष्ककतरोः सर्वमूत्रपरिस्रुतः ।
तत् पच्येत् व्यङ्गुलोत्सेधे वालुके कर्परेऽथवा ॥ ४२५ ॥
तत्रार्प्य पञ्च पूर्णानि लवणानि समानि वै ।
सामुद्रं सैन्धवं गव्यं सौवर्चं चैव रोमकम् ॥ ४२६ ॥
यवक्षारद्विभागं स्याल्लोहार्धेन तु साधितम् ।
मृदु पाच्यावतार्योऽयं गोश्रृङ्गे स्थापितो विडः ॥ ४२७ ॥
जारणे वाभ्रसत्त्वस्य सर्वलोहस्य जारणम् ।
++हंसविधिप्रख्यं रसं तत्तस्य चोत्तरम् ॥ ४२८ ॥
क्वथितशिरोरुहभाव्यं घनपिञ्जितशिरीषमूषायाम् ।
वह्नौ तावद्धमयेद् यावत् सलिलामयी भवेल्लेख्ये ॥ ४२९ ॥

---

१ 'मांसे तु', २. 'धा', ३. 'गु' ख. पाठः. ४. 'ल' क. पाठः. ५. 'मा', ६. 'तरणान्', ७. 'चू' ख. पाठः.

खल्वपाषाणके वापि हेमं वा तारमेव वा ।
शुद्धं पारतविन्यस्तं षड्गुणं पटलो रसः ॥ ४३० ॥

काकमाचीरसैर्घृष्टं निम्बकाष्ठशलाकया ।
एकीभावगतस्तावत् क्षिप्रं बध्नाति सूतकः ॥ ४३१ ॥

धमति कुलिशमूषां धाम्यमाने यथाव-
द्रविशशिकिरणाभस्तेजसा दीप्यमानः ।
रजतकनकभागौ षड्गुणं वाप्य पश्चाद्
द्रुतमपि रसराजं चोत्तरल्लोहवापम् ॥ ४३२ ॥

ताम्रताराररयुक्तो वा सहस्रांशेन वेधयेत् ।
वेधितं कनकं दिव्यं देवाभरणतत्समम् ॥ ४३३ ॥

मृताभ्रं भर्जयेच्चूर्णं विषतैलसचट्टुके ।
सप्तभागान् समावृत्य वङ्गेनाष्टपलेन तु ॥ ४३४ ॥

पलावशेषितं वङ्गं पुनरभ्रस्य सप्तकम् ।
वङ्गभागाष्टमं क्षिप्त्वा क्षपयेत् तत् पलार्धितम् ॥ ४३५ ॥

दशभागस्थितं वङ्गं पूर्ववत् सङ्क्रमान्तरम् ।
लाक्षाचूर्णनिवापेन वापयित्वा पुनः पुनः ॥ ४३६ ॥

निर्वहेत् तारभागेन दशभिर्वङ्गकैः शनैः ।
वापयेत् तारसङ्काशं विमला वङ्गशुद्धये ॥ ४३७ ॥

हेमे हेमनिभं दद्याद् रसं कृत्वा विशेषतः ।
दशसङ्क्रमनिर्मुक्तः सरसो वङ्गजो महान् ॥ ४३८ ॥

बध्नाति पारतं क्षिप्रं क्रामयेत् पत्रलेपनात् ।
तद्बीजं पारतरसं पादं दत्त्वा तु चारयेत् ॥ ४३९ ॥

द्रावयेत त्रिशूलिन्यामन्यैर्वापि यदृच्छया ।
बीजशेषं ततः कार्यं गोलं कृत्वा सुलेपितम् ॥ ४४० ॥

पेषयेत् सप्तरात्राणि सङ्घातेन सकृद्रसम् ।
पारावतपुरीषेण शिलया गन्धकेन च ॥ ४४१ ॥

अपामार्गस्य मूलेन लिप्त्वा बद्धं सुवाससा ।
सौराष्ट्रं दरदं तालं स्वर्चिक्षारं ससैन्धवम् ॥ ४४२ ॥

कासीसं सविषं दत्त्वा पीनवर्गैस्तु पेषयेत् ।
जातीपत्ररसं++++कृत्वा तमुद्धरेत् ॥ ४४३ ॥

वज्रपट्ट इति ख्यातः स्पर्शवेधी महारसः ।
घोषभाजनलेपेन ताम्रपत्रं + लेपितम् ॥ ४४४ ॥

सप्ताहान्न्यासमार्गेण विध्याच्छीतेन धापितम् ।
हेमेन वङ्गजे ++सारण+++ सह ॥ ४४५ ॥

निर्धमेदन्धमूषायां ++++++++ ।
रसस्याग्निबलं ज्ञात्वा वेधयीत विधानतः ॥ ४४६ ॥

अतःपरं प्रवक्ष्यामि धातुकल्पमशेषतः ।
अनुक्तं सर्वतन्त्रैस्तु रहस्यं परमं विदुः ॥ ४४७ ॥

धातवो बहवो दृष्टा दृश्य(ते?)न्ते) दृष्टकर्मभिः ।
पश्चान्नागात्मना धौत्यज्योतिष्कासत्वयोनयः ॥ ४४८ ॥

त्रिवर्गहेम्नि चोद्दिष्टा अदृष्टाश्च प्रधामिताः ।
न विनश्यन्ति ते भूम्यां तिष्ठन्त्याभूतसंप्लवम् ॥ ४४९ ॥

नानावर्णगुणोपेता+++ नीरतं यथा ।
दह्ना++++++ तस्मात् सङ्गं यथा कृतम् ॥ ४५० ॥

तेनाप्नोति यथासौख्यं जिह्वेन्द्रियगतं तथा ।
गालयित्वा द्रुने चाम्लं प्रक्षाल्य क्षेत्रजं रजः ॥ ४५१ ॥

तेभ्यस्सत्वं समुत्पाद्य तेन वर्गत्रिकं व्रजेत् ।
मृत्पङ्कपांसु पा++ वालुकाभ्रकसर्जराः ॥ ४५२ ॥

मूकं वा स्रावगर्भाश्च धातूनां दशयोनयः ।
सुवर्णरजतं ताम्रमायसं त्रपुपन्नगम् ॥ ४५३ ॥

रसो वैक्रान्तको वज्रं देवलोहश्च यद् भवेत् ।
तत्सर्वं धातुजं विद्याद्धातुभिर्वसुधा धरा ॥ ४५४ ॥

द्विपर्यालभहेतूनां लक्षणान्यथ वक्ष्यते(?) ।
मृत्तिकाश्च पुनर्येषां सवर्णगुणगौरवात् ॥ ४५५ ॥
स्वसन्धानसमायुक्ताः पाषाणाश्च विशेषतः ।
अर्कक्षीरं स्नुहिक्षीरं गुलमामलकीरसम् ॥ ४५६ ॥
एभिः क्षेत्रं समालोड्य शुल्वपत्राणि लेपयेत् ।
रजते रजताकारं काञ्चने काञ्चनप्रभम् ॥ ४५७ ॥
ताम्रे श्यामं विजानीयात् कृष्णः स्यान्नागवङ्गयोः ।
रसानां मारणे चैव कालिकावाहयेद् यथा ॥ ४५८ ॥
अथवा भेदितो लोहं सर्वेषां तु निकृन्तकः ।
अजपुरीषामलकस्नुहिक्षीरमयूरलम् ॥ ४५९ ॥
शुद्धगोमयसर्पिर्भ्यां सैन्धवं चाष्टमं भवेत् ।
पिष्ट्वा तु ताम्रपत्राणि परिलिप्य प्रतापयेत् ॥ ४६० ॥
मषिकाञ्जनधातुः स्यात्तत्पत्रं काञ्चनं भवेत् ।
सम्प्राप्याग्निमुखं धातून् सवर्णेन निगूहति ॥ ४६१ ॥
पर्वतादिवनान्तेषु जलमध्ये गुहान्तरे ।
क्षेत्रं प्रशस्तं जायेत नानासत्वं विमुञ्चति ॥ ४६२ ॥
स्थावराकृतयस्तत्र जङ्गमाकृतयस्तथा ।
ससत्वा धातवो ज्ञेयाः पाषाणा गर्भिणो रसाः ॥ ४६३ ॥
दृश्यन्ते धातुभिश्चित्रा नानावर्णाः सगौरवाः ।
उग्रसत्वरसाश्चापि वालुकामृत्तिकादयः ॥ ४६४ ॥

धातुनालिकेरमातुलुङ्गडाडिमकपित्थबिल्वाश्वगन्धगोमयप्रमालता-लखर्जूरहरिद्राहरीतकीविभीतिकामलककदलीकदम्बपुष्पकोशातकीजम्बूपन-सधूपकेतकीतिन्त्रिणीकतेन्दुकाक्षिचाम्रलकुचाश्मकरसैरिशिरःककपालभल्लात-कगुञ्जाकूश्माण्डकपिण्डालुककालिङ्गकत्रपुसकर्कटिका एभिर्वालुकैरण्डकपटो-लककरञ्जकाकोटमत्स्यमण्डूकजलूककूर्मकुक्कुटाण्डकुलस्थमुद्गमाषचणकम-सूरयवगोधूमव्रीहितुवरीवरीपल्लमोदकापूपकपटोदुम्बराबिल्वबदरीफलसंस्थानाः

१. 'पम् ।', २. 'गुञ्जगो' ख. पाठः. ३. 'टीना' क. पाठः.

एवमाद्यश्चान्ये पापाणाम्ल्वाकुनदो वा यत्र तत्र सर्वत्र जाताभिज्ञानास्ति-ष्ठन्ति । तेषां सत्स्वक्ष्णकक्कटकनकुलकलुककुलकशानसंहतपसंस्थानाः सप्त रसधातवः । तेषु लशुनजाम्बूकाकाग यथावेधि अनुक्ताः सहस्रवेधितौ भेकजलूकासर्वशंवेधिनः नालिकेरफलमागम्य नालिकेरफलपानीयेन चाहृत्य शोधयित्वा तु दृश्यते धातूनां चूर्णाचत्रककर्कटककोहल्कारञ्जककर्वीराकर-गुडपूतिकरञ्जन द्रव्यक्वाथकषायप्रक्षालितभावितास्विन्नं च वमनविरेचन-द्रव्यकषायोपप्लुत वा नव्येन सर्पिषा प्रसूतेन आर्जितप्रस्विन्नमवतारितम् । तेन च क्षीरेण दध्ना मूत्रेण छागरसेन क्रमेणैवानलोक्य शोषयित्वा समुद्र-वलिकमप्यर्धवलिकं वापि पिण्डीबद्धं कृत्वापूपसंस्थानवटकं वेश्मन्युपरि-च्छन्ने छायायां परिशोषितानि सप्तरात्रादूर्ध्वमादाय मुक्तबन्धनानेकत्र चूर्ण-यित्वा गुञ्जामात्रं वाप्य खदिराङ्गारपूरिते हस्तिपाताले पादयन्त्रेण वा पातयेत् । लोहं पतिष्यति पुनश्चूर्णयित्वा त्रिभागलवणं प्रतिवाप्य निर्वहेत् तन्निघर्षणच्छेदनतापनताडनादिषु योग्यं सुवर्णं भवति । एवं शेषाणां सुवर्ण-पाषाणानां पातनविधिं मृत्तिकां समवाप्य पातयित्वा जातरूपं रुक्ममाहृत्य कूर्पमूषायां कूर्पसैन्धवेन वेधकः रसधातवश्चोक्तद्रव्यरञ्जनरसेनाहृत्य शोध-यित्वा भावनीयाः क्वाथनीयाः स्वेदनीयाश्च । अथ हरिद्राकल्कहरितालता-लफलके मनश्शिलाक्षौद्रहिङ्गुलिकगोरोचनशैवलशुकपत्रभ्रमरपिण्याकसवर्णा-स्सुवर्णमृत्तिकाद्वादशघृतं नवनीतमस्तिकमत्स्यपिण्डकं गुडशङ्खशालिपिष्टकेषु कपोतखर्जूरपारावतवर्णा रूप्यमृत्तिकाः । अथ जातिहिङ्गुलिकहरितालमन-श्शिलाशक्रगोपकगोमेदकरोचनागाचम्पकपद्मरागतरिकुलस्थकोरण्डकुसुम्भाम-लकबन्धूकक्षौद्रहरिद्राभेदहरीतक्याग्निशिखाभृङ्गारप्रियङ्गुपद्मपत्रकेसरकिञ्ज-ल्कशुकशैवलच्छागपत्रसस्यकमरतकभ्रमरमयूरग्रीवेन्द्रनीलमहानीलाञ्जनहृद-यकृत्प्लीहमांसशोणितानामन्य .... .... सुवर्णाभा अर्चिष्मन्तः सोमसूर्यमण्डलं दधिपिण्डं द्रुपिण्डचित्रावासबला रसाः सर्पिःक्षीरतैलजलसवर्णाभाभिन्ना नीलै-राजिमन्तः सगुलिकासगर्भाः सचूर्णाः सवालुकाः सशर्कराः पारङ्गभासरपर्णा लेखाः स्वन्नीकवन्तः स्थावरजङ्गमाङ्गावयवसंस्थानाश्च । श्लक्ष्णस्निग्धाः पाणि-तललेपिनः सुगन्धाः सुखस्पर्शाश्च भवन्ति । ताप्यमाना न भिद्यन्ते । स्वल्प-मलावुद्देन धूमाश्च सुगन्धा भवन्ति । तत्र श्लोकः —

---

१. 'ज्ञातदिभि', २. 'मैं', ३ 'चा' क. पाठः.

यत्र कूर्पासमुत्पन्नो भूमिभागश्च पीतकम् ।
कृष्णाश्च वालुकाः स्निग्धाः काञ्चनं तत्र जायते ॥ ४६५ ॥
पीतकृष्णाश्च नीलाश्च ये चान्येऽभिमनोरमाः ।
अन्योन्यमिश्रिता वापि दृश्यन्ते हेमधातवः ॥ ४६६ ॥

अथ रूप्यधातवः गजमाहिषकापोतपरावतगोमयः भस्मातिलकल्क-गजदन्तास्थिशुक्लकृष्णनामाकारा कुक्कुटाण्डकिट्टशङ्खकूर्पस्फाटिककिण्वा दधिनवनीतखञ्जरीटानामन्यतमवर्णा वा तेषामन्यतमं बिन्दुचित्रा वा मत्स्यगन्धविस्रा वा मृदवो गुरवो लघुपाकिनो दहनमग्नौ स्फुटन्ति । बहुफेना बहुमलाश्च भवन्ति । अथ श्लोकेन —

मत्स्यगन्धोग्रगन्धाश्च मृत्तिकाश्च गुरूणि च ।
कृष्णाश्च सितवर्णाभा रजतं तत्र जायते ॥ ४६७ ॥

अथ ताम्रधातवः— कुमुदमारसेकपीतलोहितकोविदारपाटलिशिरीषपुष्पखर्जूरफलजम्बूरसवृणानि शिखा धूमगुडकण्टशर्करावर्णानामन्यतमवर्णे-बिन्दुराजिरेखाचित्रा वा शृङ्खलास्तेषामन्यतमवर्णा भेदे वा हरितपाण्डर-कृष्णपीता वा पूतिगुरवो मृदवो लघुपाचिनः समलगन्धाश्च भवन्ति ।

अथ सीसधातवः— नीलशैवलशुकसहसस्यकहरितालपेचकरोचनामन्यतमवर्णाश्च राजिलेखे वा बिन्दुचित्रा वा समलास्तेषामन्यतमवर्णा हेमाभरागा अतिगुरवो मृदवो लघुपाचिनः । खराः समलाः स्वल्पमला हरितालगन्धिनः खरा भवन्ति ।

अथ वैकृन्तधातवः— आयसश्च श्वेतकृष्णपटलदध्ना वा पाण्डुपटलदध्ना वा अतिप्रकाशन्ते पटलकाः काण्डभूर्यपत्रनीलहरितालशर्पसकण्ठशर्कराभावेन नानावर्णास्तेषामन्यत(मं ? म)वर्णा भेदा गुरवः स्तब्धाः दीर्घपाकिनः हरितालगन्धिनः खराः समला भवन्ति ।

अथ आयसधातवः— वालुकामुरुम्बशर्कराः पाषाणाः प्रायेण पीतरक्तपाण्डुराजिरोहितकपोतककाण्डफलकपिललोहितगोमहिषाजिनीलजीमूतधूम्रानामन्यतमवर्णभेदानां स्निग्धा रूक्षाः समगुरवो दीर्घपाकिनः बहुमलगन्धा बहुमलाश्च भवन्ति ।

---

१. 'त्र' ख. पाठः. २. 'तीव्रकश' क. पाठः.

अथ वज्रधातवः — रूक्षका मृनिगन्धो वागुगस्लक्ष्णमृत्तिकाविष-धूम्राः स्युः हेमवज्रस्य जायन्ते वज्रलिप्तेषु नगाणाः । अथवा खग रूक्षाभाः ।

एकरेखादिवज्रेषु द्वादश परिकीर्तिताः ।
रेखा + पञ्चषड्वज्रसदृष्टि विषमंहरेत् ॥ ४६८ ॥
अन्ये वा वज्रलिप्तेषु तद्भेदकारणं शृणु ।
क्षाराम्लमूत्रवर्गैश्च विषतोयसमांशकैः ॥ ४६९ ॥
कषायमनुष्यधान्यैश्च सर्वेषां भाजनं वपेत् ।
वज्रवल्ली च कन्दश्च मेषशृङ्गसमायुतैः ॥ ४७० ॥
स्नुह्यर्कपयसा युक्तं अलाबुस्नेहमेव वा ।
सैद्रजान्यग्निवर्णानि खदिराङ्गारतापितम् ॥ ४७१ ॥
सन्दंशेन गृहीत्वा तु सर्वतोयस्य संक्षिपेत् ।
भिन्दन्ति चरसंचूर्णं रक्तवन्तरसा स्मृताः ॥ ४७२ ॥
तेनैव सिद्धद्रव्याणि दग्ध्वां नु विभवन्ति च ।
क्षीरं कीटरसा श्वेता ये चान्येऽपि रसायनम् ॥ ४७३ ॥
चूर्णं तु प्रतिवापेन लोहानां कनकं शुभम् ।
सिद्धद्रव्यमनोगामी लोहजा वेधकाः स्मृताः ॥ ४७४ ॥
स्वच्छं गुरुमृदुस्निग्धं तापशुद्धो क्षयो भवेत् ।
रसलोहं च यद् विध्यात् सङ्क्रमा वेधकाः स्मृताः ॥ ४७५ ॥

अथ रसधातवः — स्पर्शवेधी शिरीषाभा मयूरकाण्डाद्यादिषु जायते तेषां वज्रलिप्तेषु गुञ्जाप्रवालवर्णा बालार्कनिभाश्च प्रक्षिप्य(ते ? न्ते) तेनैव लोहमावर्तयेद् अनन्तवेधी दवाग्निना स प्रभवन्ति ये मयूरग्रीवनिभाः(?) । एतस्मिन् गुञ्जादिना विद्धानि तस्मात्तदा सुवर्णं करोति । तासां वर्णाः हिङ्गुलिकइन्द्रगोपकजम्बूरसस्य ताश्च रक्तसैन्धवमनश्शिलादिभिः सवर्णप्रभो रक्तवर्गः तप्तकाञ्चनहरिद्राभेदतालतालरसगोमेदकवैडूर्यक्षौद्रादिभिः समवर्णप्रभो पीतवर्गः मुक्तशङ्खकर्पूरस्फटिकसैन्धवादिभिः सवर्णप्रभः श्वेतवर्गः मूलभिन्नाञ्जनशुकपत्रादिभिः सवर्णप्रभो नीलवर्गः अरिष्टजम्बूफलकर्मादिभिः समवर्णप्रभः कृष्णवर्गः । तत्र श्लोकाः —

१. 'पत्र' क. पाठः. २. 'त', ३. 'ग्वानपि' ख. पाठः.

स्वप्रदेशाः परिस्रुताः सवर्णाकृतिमृज्जलैः ।
नातिद्रवा नातिघनो बहिरागसमन्वितः ॥ ४७६ ॥
द्रवेदासत्वं[illegible] सर्वैर्[illegible](?) ।
पठिताः पांसुरजो ग्राहि(?) निसर्पत्याखुतैलवत् ॥ ४७७ ॥
शर्कराश्मनि कठिनो तादृशोऽपि युज्यते ।

हिङ्गुलिकादिरक्तवर्गः केवलं रसमुक्तं वा उपरसोपयुक्तो वा । कालिका-पुटो वा प्रतिवापे वा पञ्चशतवेधी तप्तकाञ्चनवर्णादिपीतवर्गः शुल्बे षट्छतवेधी भवति । प्रतिवापितोऽपि रक्तश्च मयूरग्रीवनीलवर्गोऽरिष्टकादि-कृष्णवर्गः सीसकालिका भवन्ति । केवलं रसोपरसविषयुक्तं वा क्राथन-भावनस्वेदनसप्तशतवेधी सहस्रं वा वङ्गं वा रजतं कनकं वा भवति । सुवर्णैः रसमृत्पाषाणं वा स्थावरजङ्गमाकृतयस्तत्समानवर्णाः वर्गो वा स-म्प्रयुक्तः स्नेहमूत्रक्षाराम्लकषायपित्तवशान्मज्जाशोणितविषोपविषशिलाजतु-सर्जरससुधाशङ्खहरिद्राञ्जनरोमतोपरसधातुवर्गः रसयुक्तं सम्प्रहृत्य सम-रसधातुमालोड्य गोविषाणे स्वेदयेन्मासं मासार्धं वा तद्रसकल्केन प्रोक्त-लोहेषु पात्वालं(?) दत्त्वा पश्येद्यथाविधि हित्वा रसं सवर्णाभिन्नं स्यात् । तस्यातिरसं भवेत् ।

यस्माद्विशुद्धस्तु तं लोहं तावद्यावत् परीक्षकः ॥ ४७८ ॥
अप्राप्तवर्णं यद् दृष्टं लोहक्षीररसं भवेत् ।
एषा रसक्रिया प्रोक्ता प्रसादीत्यभिसंज्ञिता ॥ ४७९ ॥

यवनाढकतण्डुलाकृतयश्च प्रवालसर्वाञ्जनरेणुसदृशाश्च रक्तपीतानां वर्णानां च भवति । सर्वे रसधातवः ।

पाषाणमृत्तिकाभ्राणां क्षिप्त्वाग्नौ तु विलापयेत् ।
जायेत बहलं तत्र धूमश्चैषां घनो भवेत् ॥ ४८० ॥
सिकतानां तु सर्वेषां धूमरो धायनो भवेत् ।

अथवा धातुरसलोहं वा पूर्वोक्तवर्णान्मृत्तिपाषाणं वा धातुरजसो वा साम्यन्ते सर्वधातुप्रदेशेषु जायन्ते । स्थावरजङ्गमानामन्यतमाकृतिं प्रोक्तवर्णो वा तप्तकनकवर्णो वा बन्धुजीवसमाना रक्तपीतबिन्दुविविधो वा हरितबिन्दुविविधौ हरिदग्धबिन्दुचित्रा वा हिङ्गुलिकमनश्शिलामयूरग्रीव-

१. 'णैः' ख. पाठः. २. 'त' क. पाठः. ३. 'स्यन्दीत्व' ख. पाठः.

कृष्णा रक्तकुक्कुटनाम्रगजावर्तरजनसुवर्णोदकशोणितनर्पीनवर्णा विन्दुविचित्रा चोपला वा स्विन्नवनपाणितले वा शङ्कमानतः पतन्ति । सौवर्णरूपवद् घनो न भिद्यते । दह्यत इति सप्तलोहानि । रसधातवः

सप्तभिश्च कथा सत्त्वैर्नचैवं वर्तन्ते सह ॥ ४८१ ॥

धातवः कठिनप्राया नानावर्णाश्च यत्प्रभाः ।

सर्वसत्त्वप्रतीवापैः सहसत्त्वैर्भेषजैः सह तस्य विधिं पुरस्ताद् वक्ष्यते च क्रियात्मभिः ।

नालिकेरफलादि + गर्भस्था नाम धातवः ॥ ४८२ ॥

विचित्रा विन्दुरेखाश्च सुवर्णगुणगौरवात् ।

पूर्वोक्तेन विधानेन न रसोपरसाः स्मृताः ॥ ४८३ ॥

लोहवर्गसमस्तो वा रसलोहसमीकृतः ।

स्नेहवर्गश्च संयुक्तैः क्वाथयेच्च विमर्दितैः ॥ ४८४ ॥

रञ्जयेत् पातितं लोहं सर्वसत्त्वपरीक्षकः ।

प्राप्तवर्णश्च यल्लोहं तल्लोहेषु च वेधयेत् ॥ ४८५ ॥

रसयुक्तमिदं श्रेष्ठं वेधयेत्तु परीक्षकः ।

तद्यथा रसधात्वष्टौ धातुजा गर्भजास्तथा ॥ ४८६ ॥

लोहानां चौषधैरेव प्राणिजाष्टौ च ते रसाः ।

देवलोहनधाम्यस्तु स्वयमुत्पद्यते रसः ॥ ४८७ ॥

दैवतादेव सम्भूतो देवलोहः स उच्यते ।

योनिर्दशविधा चैव पञ्चयोनिषु संहरेत् ॥ ४८८ ॥

गोधनादीनि[1] मूलिन्यः क्षारः षड्विध उच्यते ।

अथ करीरकचफलमूलदलपुष्पनालसलवणस्नेहमज्जावशास्थिरुजक्षार-मूषसीसादिलोहसम्भाराः रसमधुफाणितगुडदधिलोहितक्षीरमूत्रमध्वम्लोपवि-षगताः सहितरोचिरायकच्छपवायसराजार्कस्नुहिवरणपलाशारुष्ककरञ्जजाति-लबकाकारकदम्बबदराक्षि च कदल्यपामार्गचित्रकुक्कुटकाण्डाग्निमन्थपूती-करञ्जमोक्षककुलस्थगुडकरकगौतमसप्तपर्णादि चान्येषां वा ।

तरूणां रक्तपीतानां पुष्पाणां रञ्जना शुभा ॥ ४८९ ॥

---

१. 'दिंशु' क. पाठः.

एतेषां ये क्रमात् क्षाराः सर्वशास्त्रार्थकोविदाः ।
स्प(र्शे ? र्शि)ता गन्धिता क्षारा रूक्षवर्गा इति स्मृताः ॥ ४९० ॥

तेषामपि विरूक्षाश्च निर्धूमं च घटे दहेत् ।
लवणाम्लवर्गादीनां ++ क्षारेण लोलयेत् ॥ ४९१ ॥

पीतरोहितवर्णा ये द्रुमाः काञ्चनिकाः स्मृताः ।
अन्ये च सितपुष्पाश्च द्रुमा रजतकारकाः ॥ ४९२ ॥

सक्षीरा पाशनावृक्षाः पीतपुष्पाश्च दाशनाः ।
रञ्जना रक्तपुष्पाश्च क्षाराः पुष्पफलै रसैः ॥ ४९३ ॥

आविगोमूत्रसंयुक्ता क्षाराः काञ्चनिकाः स्मृताः ।

खरगजाश्वमहिषक्षारथानाराखादितालहिन्तालासनशिंशुपार्जुनकुरवक-कुरण्डकमधुमल्लातकाश्मन्तकमोक्षकादिरक्तपीतासितपुष्पतरूणाम् अङ्गाराः प्रशस्तं गवास्थिमहिषास्थीनि दग्ध्वा मृत्तिकया सह अस्थि चतुर्थमिदं ....
........शिलाजानि अस्थिसौराष्ट्रिकाञ्चनम् ।

घनचूर्णं च तत्तुल्यं सत्वमात्रं मृदा युतम् ॥ ४९४ ॥

मणितुत्थमिदं नाम सर्वलोहेषु रञ्जयेत् ।
लोहपर्पटकाकिट्टं कूर्पशङ्खसुराचकम् ॥ ४९५ ॥
++++टलः कुप्पि ++ चन्द्रमृताश्मकम् ।
एतैश्च तुल्यभागौ द्वौ भृङ्गागो च तुषा तथा(?) ॥ ४९६ ॥

केशारुष्करं च भृङ्गो[1]र्नाम मलहिंसीकृतम् ।
स्वर्चिकाक्षारसंयुक्ता वज्रतुत्थं विधीयते ॥ ४९७ ॥

सर्वलोहेषु शुल्बेषु बीजकर्मसु निर्वहेत् ।
काथा नामावना स्वेद्या सर्वधातुविशिष्यते(?) ॥ ४९८ ॥

क्षाराम्लमूत्रमज्जास्ते लवणैश्चैव पित्तजैः ।
विषेण रञ्जनायुक्तैर्विष्ठावर्गै[2]र्युतैरपि ॥ ४९९ ॥

[3]काथ्यादिभिः कषायाद्यैस्त्रिविधैस्तत्र कारयेत् ।
तिलकल्कमजाक्षीरं लवणं कन्दली त्रिवृत् ॥ ५०० ॥

---

१. 'त पु' क. पाठः. २. 'र्णामहिषी कु' ख. पाठः. ३. 'ष्लु' क. पाठः.

इत्याह सर्वसत्वानां पिण्डीबन्धमिहोच्यते।

तिललवणसर्षपमधुकयवकुलस्थपावकवमनविरेचनद्रव्ययुतं श्वानवानरगजाश्वास्थिसहितं विषतरुबीजैर्युतं लवणगगगुडशिखिशिरोरुहकाश्यादिभिः द्रव्ययोजितं गोजामहिषपञ्चायुतं पिण्डीभूतं कृत्वा धमेत्। सुवर्णादिसत्वं पतति। मृदुमेलापहश्च भवति। वज्रनेदनिकामूलं मेषशिरोरुहकुलस्थादिस्नुह्यर्कक्षीरयुतं पूर्वोक्तविधियुक्तं सप्तदिनशोषितं धमेत्। सर्वे सत्वाः पतन्ति। मृदवश्च भवन्ति।

मधुसीसकचूर्णानि कूर्पचूर्णं तथैव च॥ ५०१॥

सर्वसत्त्वविशुद्धं तु मृदूकरणमुत्तमम्।
भल्लातकं मधूच्छिष्टं मनुष्यास्थीनि वापितम्॥ ५०२॥
सिक्तं मृदु स्यात्तारं च मृदूकरणमुत्तमम्।
गोक्षीरं शृङ्गमस्थीनि मेषशृङ्गं तथैव च॥ ५०३॥
गजदन्तखुरं चैव मीनास्थीनि च कूर्पजम्।
विषबीजस्य संयुक्तं कपालस्य रजस्तथा॥ ५०४॥
न द्रवन्ति च लोहानि विडैरेतैर्विना पुनः।

लवणाम्लक्षारविष्ठाविषोत्तमाख्यं लेपयुतं सत्वानां कृतं सप्ताहं स्थापयेत्। धुंधुरि कारयेत्। यावत्तावल्लवणाहतं तस्य चूर्णेन कूर्पसीसलवणकपालचूर्णगोक्षुरशृङ्गचूर्णं दत्त्वा पूर्ववत्पि(ण्डि? णिंड)पातयेत्। अग्निद्रावणमृदूनि भवन्ति। तद् द्रव्यगणैः प्रतिवाप्य निषेकं मधुमधूकमजापयसि तैलं घृतगुलकिण्वयुतं सकदलीकं यद्पि शतसहस्रधा विभिन्नं भवति। मृदु त्रिसप्त तन्निषेकाः अर्कोत्तमस्नुहिहली कान्चुकी नक्तमालिका गुञ्जावह्निः सुरपतिमदिरामिङ्गुदीमश्वगन्धा

तक्रे गुडं तमहरमिदं सर्वलोहेषु दृष्टं
वङ्गस्तम्भं जनयति महाजोत्सको नाम योगः (?)॥
अर्कक्षीरं स्नुहिक्षीरमजाक्षीरं कटुमत्स्यकैः॥ ५०५॥
पृथिव्यां दुष्टलोहानि मृदूकरणमुत्तमम्।

---

१. 'त्यादि स' क. पाठः. २. 'बद्धं कृ', ३. 'धुद्धुरि', ४. 'कं वा म', ५. 'लिनी का' ख. पाठः.

रसधातुक्राथभावनास्वेद्यैः पुनश्चूर्णयित्वा रञ्जनतरुरसपुष्पजलेनापि मूत्रं स्थापयेत्रिरात्रं परिस्राव्य रञ्जनक्षाररञ्जनरसरञ्जनकषायपीतलोहितपुष्परसेन भावयेद्रसधातवः गोविषाणकुम्भे वा रक्तजैश्च वराहगोमेदकसुवर्णगैरिकलोहिताः पञ्चानां मूलानां समभागानि चूर्णानि सङ्गृह्य तेषामेकैको भागरसः ताभ्यां परिस्राविताभ्याम् आलोड्य गोविषाणे सपिधानं कृत्वा दश रात्रं पञ्चरात्रमपरं चक्रे[2] स्वेदनविधा स्वेदयेत् । प्रतिवापनिषेकाभ्यां कृष्णगोरोचनं मृदा कूपतुत्थे कूपलवणलिप्त यस्मिन् सत्वं विद्धति तस्मिन् सुधिया मृदुं[1]ः ता द्रवीकृते कृतस्वेदं रसधातुचूर्णं सत्वं प्रच्छादयेत् तेन मात्रं प्रतिवपेत् । ततः शीघ्रमुपरिकूपलवणेन प्रच्छादयेत् ततः सुवर्णं भवति । यत्र दिने कांस्यारिष्टार्धरजतेन वा वटपत्रभ्रमरपक्षबहलपत्राणि त्रिभागसैन्धवेन बीजपूरं च दशमाम्लपिष्टेन रसधातून् प्रतिवाप्य पुटं निरुच्छ्वासं गोमयैर्दग्ध्वा तानि पत्राणि पुनर्विलापयेत् ततः सुवर्णं भवति । कृतस्वेदा रसधातवः पादोपरसपूर्ववत् क्षारादिभावना पिण्डीर्बद्ध्वा बलेन धमयेन्मृदुर्वा मूषोदरे मर्दितं पातयेत् तस्य निर्धाम्यमानस्य तेषां वाय्वग्निसवेगो धाम्यमानाद्रसो दिव्यो गौरवेण समन्वितः पुण्डरीकप्रभो गोमाहिषं तालफलाय प्रद्राव्य लोहानि सेकापि पाशपत्रनिभोऽपि वा बस्तशीर्षकमठ करिदन्तभ्रमरपत्रजम्बूफलाकृतिः ।

प्लक्षोदुम्बरसङ्काशो हरितालनिभोऽपि वा ॥ ५०६ ॥

प्रोक्ता वर्णाश्च यावन्तः प्रस्पन्दादि[3] स धातवः ।

रसस्य लोहं प्रविलीयते च सत्वारशुद्धं प्रविशेत्ततस्तु ।
प्रघृष्यमाणं निघर्षमेति(?) सत्वं प्रविष्टो मृदुतामुपैति ॥ ५०७ ॥
न हेमजातिर्नच पल्लवं भवेत् कनीयसे वाप्यथवापि वङ्गम् ।
नागं तु हेमेन कृपाविलोहं धाम्यं रसमुत्तमो गुरु (?) ।
सरूप्यवर्णोरगपूर्णगन्धो भवेद् यदा स्यात् सुशुभस्तु धातुजः ॥ ५०८ ॥
निधाम्यमानं तु तदा मृदूरसो यदा द्रविष्टो यदि कृष्णवर्चसा ।
विभिद्यते यद्यपचत्त्रिधातुजा विलापये + + + + + + + + + ॥ ५०९ ॥
+ + + + + + + + + + + + + + + + शु भवेद् बुधैरपि ।

---

१. 'वि' क. पाठः. २. 'क्रस्वे', ३. 'दुस्पन्द्राद्र' ख. पाठः.

समसत्त्वमत्याशु + नाशयेच्च प्रविष्टमात्रं कठिनीकरोति ।
तत् क्षीयतेऽग्नावपिच क्रमेण सत्त्वं प्रविष्टोऽपि च संप्रदुष्टः ॥ ५१० ॥
सत्त्वं प्रविश्यापि च संप्रविष्ट एभिस्तु दोषैः परिवर्जितोऽयम ।
तद्भ्राम्यमानं + + कल्पितं च पूर्वोक्तमार्गेण तु सेचयेत ॥ ५११ ॥

ये केचिद् रसलोहेषु रसकर्मविनाशिनम् ॥ ५१२ ॥
बीजं रसपरं श्रेष्ठं चारणाज्जारणाविधेः ।
सर्वदुष्टरसानां तु मधुसर्पिवसायुतम् ॥ ५१३ ॥
प्रस्यन्दादिविधिं कृत्वा कूर्पमूपागतं भवेत् ।
रसलोहं रजः कृत्वा पादांशोपरसादिकम् ॥ ५१४ ॥
अथवा पलमाक्षीकं योजयेद् भावितं पुनः ।
पातनायन्त्रमूकस्थटङ्कणेन समन्वितम् ॥ ५१५ ॥
एवं त्रिकृत्वा पतितं रक्तपीतं च जायते ।
हेमतारमुखं वापि वङ्गनागमुखोऽपि वा ॥ ५१६ ॥
चारितं निखिलं चैव क्षिप्रं बध्नात सूतकम् ।
कान्तसत्त्वं तथैवाशु तीक्ष्णामलसुयोजितम् ॥ ५१७ ॥
एवं त्रिर्वारितं बद्ध्वा क्षिप्रं बध्नाति सूतकम् ।
हेमबीजं रसं ताम्रं मध्यमं च नियोजयेत् ॥ ५१८ ॥
एकद्वित्रिचतुरा[२] + + यथोपरसादिकम् ।
मूकमूषीकृतं[३] शान्तं हेमतारावशेषितम् ॥ ५१९ ॥
तत्समं करकं दत्त्वा रसवीर्यविचक्षणः ।

अथ पातनाविधिं वक्ष्ये—

वज्रवैक्रान्तकावेतौ हेमतारौ च गर्भजः ॥ ५२० ॥
वज्रवैक्रान्तकावग्नौ हेमभागौ[४] च गर्भजः ।
अपाति(त?)रसलोहा ये ये चान्ये दीर्घपातिनः ॥ ५२१ ॥
सर्वे ते द्रावणं प्राप्य वर्तन्ते लोहधातवः ।
पटलं द्रावणैर्युक्तं निर्गतेषु विपाचितम् ॥ ५२२ ॥

---

१. 'पातितं कृत्वा क्षि', २. 'तद्धा', ३. 'हेम दत्वा तु र', ४. 'गश्वग' ख. पाठः.

हिङ्गुमिश्रैस्त्रिकटुकैर्जलजारुविमिश्रितम् ।
यदभ्रं तत्समं लोहं स्रवते त्रिप्रवेशिकम् ॥ ५२३ ॥
अलाभे द्रावणैस्त्वेताः क्षारमूत्रत्रिमिश्रिताः ।
वज्रकन्दलिशिग्रूणां विषाणां बीजतोयतः ॥ ५२४ ॥
वमनविरेचनाभ्यां तीक्ष्णे चैव रसायनम् ।
सस्नेहरत्नजैर्वान्यैः पिण्डीबद्धं तु कल्पयेत् ॥ ५२५ ॥
महारसो महास्नेहो महारुधिरमेव च ।
महाक्षारसमायुक्तं पर्वतानां विरेचनम् ॥ ५२६ ॥
एवं सम्पातितं शुद्धं लोहकर्मसु योजयेत् ।
स्फुटते हेमतारौ च युक्तं वक्ष्यामि लक्षणम् ॥ ५२७ ॥
अतिरसमतिस्निग्धं रूक्षं संसृष्टमेव च ।
चतुर्धा स्फुटते सत्त्वं यदेतद् भूमिजं विदुः ॥ ५२८ ॥
मृच्छिलावालुकावङ्गे धातुस्तावेव पर्वते ।
पञ्चस्वेतेषु जायन्ते लोहजा दशजातयः ॥ ५२९ ॥
रूक्षितं विषतैलैस्तु निषिञ्चेन्मधुसर्पिषा ।
नागोदरीरसे चापि कङ्कुणीतैलसंयुते ॥ ५३० ॥
नागेन वापितं शोध्यं वपेत् कूर्म[1]मृदुत्तमम् ।
निषिञ्चेत् सर्वमूत्रैस्तु यावद् भवति निस्तमः ॥ ५३१ ॥
स्निग्धं विरूक्षयेत् क्षारैर्लवणैः कूर्पसंयुतैः ।
एवं मृदुत्वमायाति ज्येष्ठमध्यकनीयसम् ॥ ५३२ ॥
शुल्बेनातिरसं द्राव्य निर्वपेन्नागवापितम् ।
तारे नान्येन लोहेन संयुक्तं मार्दवं भवेत् ॥ ५३३ ॥
संश्लिष्टं सङ्करं जातं द्विकं ये दशजातिषु ।
तयोर्यत्सारवत्सत्त्वं गृह्यते मूलधातुभिः ॥ ५३४ ॥
असारमिश्रितं यत्तु तत्सत्त्वमरिभिर्हरेत् ।
रसमिश्रमसारत्वाद् गृह्णीयाच्च रसोत्थितम् ॥ ५३५ ॥

१. 'र्मं मृ' ख. पाठः.

वङ्गमिश्रं लघुद्रावी दुर्गन्धं कालिकान्वितम् ।
ताम्रमिश्रं तु हरितं वर्णतो धूमतोऽपि वा ॥ ५३६ ॥

निघर्षे रक्तपीताभम् ईषत्स्तब्धं सुताडने ।
तीक्ष्णेन मिश्रं स्फुटते कृष्णवर्णं सुकालिकम् ॥ ५३७ ॥

दीर्घद्रावी सुतप्तं तच्छीतलं चापि तद् भवेत् ।
दुर्गन्धा तारहेमस्तु पुटपाकेन निस्तमान् ॥ ५३८ ॥

तीक्ष्णेन युक्तं यत्ताम्रं निर्धान्तं मृदुतां व्रजेत् ।
शुल्वकयं च तद्गच्छेन्नच मुञ्चेत कालिकाम् ॥ ५३९ ॥

नागमिश्रं गुरुस्फोटीनिर्धान्तं पीतधूमताम् ।
निर्गन्धसलघुद्रावी तारहेमविमिश्रितम् ॥ ५४० ॥

रसोत्थं शतधा याति यथा लवणमाहतम् ।
तेजिष्ठो भ्राजते चूर्णं श्वेतरक्तः सपीतकः ॥ ५४१ ॥

एवमाद्यस्य लोहस्य सारासारविपर्ययम् ।
यत्सारं तूद्धरेद् विद्वान् हंसः क्षीरं यथा जले ॥ ५४२ ॥

निस्तमं वेधकं लोहं महासारं सुदुर्बलम् ।
श्वेतं पीतं च रक्तं च वर्णतश्च रसं तथा ॥ ५४३ ॥

श्वेतं ताम्रेण तारं स्यात् तारताम्रेपु हेमताम् ।
रक्तहेमनिभं[1] कुर्याद् यज्जातं पञ्चयोनिषु ॥ ५४४ ॥

इन्द्रगोपपलं सिन्धुं मण्डली मातृवाहका ।
कौण्डिन्यकलनाभागमेकैकं गन्धकस्य तु ॥ ५४५ ॥

हिङ्गुलीका स्वरुधिरपिण्डं मण्डूकमूत्रतः ।
हेमपत्रं सुलिप्तन्तु अन्धमूषाशतस्थितम् ॥ ५४६ ॥

अग्निस्थं द्रवते क्षिप्रमेवमेवाभ्रकं द्रवेत् ।
द्वितीयं पूरकरसं शालिपर्णीशिलारसैः ॥ ५४७ ॥

अग्निस्थं संजरेच्चापि रसांश्चोपरसान् विषान् ।
अयोमुष्ट्या + + + + सञ्चाप्य तु पुनः पुनः ॥ ५४८ ॥

---

१. 'पीतनि' ख. पाठः.

+ + स्समुखवाहस्य चूर्णं चोपरि सारितम् ।
तद्वर्णमभवत् सूतं कृष्णमेघसमो भवेत् ॥ ५४९ ॥

तत्कल्कं तारमालिप्य शोषयेदातपे भृशम् ।
तच्छलक्ष्णं द्रावयन् क्षिप्रं क्षणाद् भ्रमरसन्निभम् ॥ ५५० ॥

तत्तारं हेमसान्दिग्धं दशांशे व्या + + रिकम् ।
पञ्चमांशेन वा + + भवेन्मातृकसन्निभम् ॥ ५५१ ॥

मृतशुष्कं तु गृह्णीयाद् वेधकस्य न सिध्यति ।
कुर्वीत धर्मनिपुणो न दद्यात्पापकर्मिणः ॥ ५५२ ॥

शालिपत्रोपमैः पत्रैः सुपक्का शालिवर्णिनी ।
सा ज्ञेया द्रावणविधौ सर्वलोहस्य चारिणी ॥ ५५३ ॥

रसोपरसवर्गाणामभ्रकस्य रसस्य च ।
कालिकाग्राससंशुद्धिमकृत्वा यः समारभेत् ॥ ५५४ ॥

प्रसिद्धो वेधनं तस्य कार्ष्ण्यगन्धो विवर्णता ।
तत्सत्त्वं सलघु द्रावी जायते हेमतारयोः ॥ ५५५ ॥

चारितो जारितो वापि द्रावितो रञ्जितोऽपि वा ।
नोन्मुक्तस्सह(जां ? जं) कार्ष्ण्यं संक्रान्तः कालिकान्वितः ॥

ग्रासदुष्टो रसो जीर्णो बीजैश्चाश्वन्धलक्षणैः ।
अरक्तैर्नागवङ्गाद्यैः कुर्याद्वा वेधनोत्थितम् ॥ ५५७ ॥

तस्मात्प्रतिक्रियां कुर्याद् ग्रासदोषविनाशिनी ।
सङ्क्रान्तकालिकाछेदं दुष्टभेषजमुत्तमम् ॥ ५५८ ॥

नागोष्ट्रखरगोजानां मूत्रैः क्षारैर्विपाचयेत् ।
असनत्वक्कषायेण केतकीनां निषेचयेत् ॥ ५५९ ॥

दोषनाशाय सप्ताहं सूतकं शुद्धतां व्रजेत् ।
वज्रवैडूर्यसङ्काशं विमलं स्वच्छतां गतम् ॥ ५६० ॥

वेधयेत् तारताम्रेण निर्दोषं काञ्चनं भवेत् ।
कालिकाग्राससहितं यः कश्चिद् वेधयेद्रसम् ॥ ५६१ ॥

---

१. 'प' ख. पाठः.

वेधितं तारताम्रं तु विषं तैले निषेचयेत्।
पुटपाकविधानेन हेमानां वर्णवर्धनम् ॥ ५६२ ॥
कालिकारससंयुक्तं मृदुत्वं लभ्यते भृशम्।
निर्गुण्डीपयसा चैव हलाचोत्तरकर्णिका ॥ ५६३ ॥
नालजं कनकं सर्वमम्लवर्गे निधापयेत्।
तद्रसे क्षेपयेत् तप्तं नागताम्रं गुणत्रिसम ॥ ५६४ ॥
मेलितं वेधितं चैव यावन्निर्मलतां व्रजेत्।
मेषशृङ्गमथाजा वा काक्षीसैन्धवगैरिकम् ॥ ५६५ ॥
कार्मासं सविषं चैव अम्लेन मधुना युतम्।
++++++++पत्रं लिप्त्वा पुटे पचेत् ॥ ५६६ ॥
काक्षीगैरिककार्मासं सैन्धवं वर्णमृत्तिका।
तत्सर्वं मधुना लेप्य घनं लिप्त्वा पुटे पचेत् ॥ ५६७ ॥
काक्षी मनःशिला चैव दरदं रक्तसैन्धवम्।
लाङ्गली तुम्बिनीमूलमेषमूत्रेण लेपयेत् ॥ ५६८ ॥
यद्धेमं कालतापं स्याद् रसविद्धं तु पाण्डरम्।
लेपितं पुटपकं तु निस्तमं चोत्तमं भवेत् ॥ ५६९ ॥
गैरिकं दरदं चैव रोचनारक्तसैन्धवम्।
फलाम्लसुनिषण्णस्य रसेन सह लेपयेत् ॥ ५७० ॥
त्रिभागलवणं भस्म उत्साद्येत पुटे पचेत्।
निस्तमं काञ्चनं रक्तं ताम्रोद्गीर्णं शुभं भवेत् ॥ ५७१ ॥
गैरिकं सैन्धवं काक्षी कासीसं स्वर्चिका तथा।
सौवर्चलं यवक्षारं मातुलुङ्गाम्ललोलितम् ॥ ५७२ ॥
चन्द्रार्कवैनतेयानां युक्तानां ग्रासदोषिणाम्।
हेमालाभाद्विधातव्यं वर्णोत्कर्षणमुत्तमम् ॥ ५७३ ॥
केवलं वेधयेत् ताम्रं हेमयुक्तं रसं तथा।
भवेत् समादत्ते तारं पीतत्वं हेमयोजिते ॥ ५७४ ॥

१. 'षतै', २. 'शुद्धं' ख. पाठः.

तस्मात् ताम्रं च तारं च यथायोगनियोजितम् ।
वेधयेद्वापि लेपेन रसेन्द्रस्य विधानतः ॥ ५७५ ॥

घनोपरसलोहानां चारितानां रसेन तु ।
चारणादष्टभागैकं रसभावं नियच्छति ॥ ५७६ ॥

तद्रसं पावकसहं कुर्यात् कालविवर्जितम् ।
तस्मात् षड्गुणसंजीर्णं बलवृद्धिमवाप्नुयात् ॥ ५७७ ॥

महौषधीनां प्रोक्तानां तत्क्षणात् पिण्डकारिणाम् ।
सञ्जीर्णजारणविधौ तत्सर्वं रसतां व्रजेत् ॥ ५७८ ॥

बाष्पिका लाङ्गली गुञ्जा कण्टकाली सुशालिनी ।
हरिद्रा रक्तचित्रं च भल्लातकसमुस्तकम् ॥ ५७९ ॥

शाल्मली काकजङ्घा च कनकं चाश्वमारकम् ।
वञ्चुलं पिप्पली शङ्खं निम्बपत्री च शोभने ॥ ५८० ॥

ज्योतिष्मती नागबला सबला चेन्द्रवारुणी ।
हस्तिकर्णी हठक्षारं पद्मपत्ररसस्तथा ॥ ५८१ ॥

कालिकाग्रासशुद्ध्यर्थं क्राथनं मर्दनं बहु ।
प्रक्षालयेदाम्लमूत्रैः सूतकस्य विधीयते ॥ ५८२ ॥

विष्ठावर्गं यथालाभं सैन्धवासुरिहिङ्गुभिः ।
दत्त्वा तु द्रावणांशेन मर्दयेत् स्वेदयेद् भृशम् ॥ ५८३ ॥

दह्यते सहजं कार्ष्ण्यं सप्तरात्रान्न संशयः ।
स्त्रीमूत्रं मानवं मुख्यं मर्दने स्वेदने तथा ॥ ५८४ ॥

कुलस्थोदके वापि पचेन्नृमांसेनापि पातनम् ।
बन्धनं सुदृढे वस्त्रे ऋतुकाले नियोजितम् ॥ ५८५ ॥

त्रिरात्रं स्थापयेद् योनौ तदुद्धृत्य प्रमर्दयेत् ।
ततः प्रक्षाल्य मूत्रेण कर्मणा गतकालिकम् ॥ ५८६ ॥

नागसङ्क्रमनिर्मुक्तं कुर्याद् बन्धनरञ्जनम् ।
नालिकेरफलाकारं द्वादशाङ्गुलनालकम् ॥ ५८७ ॥

---

१. 'ता', २. 'जा' ख. पाठः.

सुचिरं जलमध्यस्थं तद्योग्यं गर्भपातने।
एवं नागविशुद्धं तु चारयेदभ्रकं रसम्॥ ५८८॥

मारितं चारितं चापि दाशपाशनरञ्जनैः।
जलूकाखण्डशो ग्राह्यं सुव्यक्तं चारयेद् रसम्॥ ५८९॥

जठरग्राहकैश्चार्यं जारणौषधिभिर्जरेत्।
गन्धकामलहिङ्गूनि ++++++++॥ ५९०॥

+++मात्रया दत्त्वा द्रावणौषधिभिश्चरेत्।
विषालुकसमा मुस्ता चारयेदुक्तमार्गतः॥ ५९१॥

समं द्विगुणमेवापि षड्गुणं च स्वशक्तितः।
काकविष्ठोपमं पिण्डं नाडीयन्त्रेण पातयेत्॥ ५९२॥

पूर्वं नियामकैर्लिप्त्वा तथोपरि रसं न्यसेत्।
एवं सम्पातितं सूतं चारितं जारितं पुनः॥ ५९३॥

विज्ञायाग्निबलं वृद्धिं द्रावणैस्तु विडैः पचेत्।
तद्रसं निर्मलं स्वच्छं सङ्करं चारयेत् पुनः॥ ५९४॥

अभ्रसत्वायसं शैलं हेमतारं सुकाञ्चनम्।
नागवङ्गं च ताम्रारमन्धमूषागतं त्रिधा॥ ५९५॥

सुसूक्ष्मं सूतकसमं चारयेच्चारणौषधैः।
तत्पिण्डमष्टमांशेन जारयेत् समषड्गुणम्॥ ५९६॥

पूर्वोक्तेन विधानेन लोहजीर्णोदरो यथा।
कृष्टिशुल्वं पुनश्चार्यं द्रावणौषधिभिर्भृशम्॥ ५९७॥

द्रावितं चारयेच्चूर्णं यावत्पिण्डं तमावहेत्।
तत्पिण्डं पातनायन्त्रे पातयेदुक्तमार्गतः॥ ५९८॥

समं तु द्विगुणं वापि यावद्रक्तं भविष्यति।
नागवङ्गायसं ताम्रं मारितं रिपुवर्गतः॥ ५९९॥

माक्षिकेन द्विभागेन योजितं मधुसर्पिषा।
भावितं क्षारमूत्रैस्तु मद्याम्लैर्द्रावणैर्विषैः॥ ६००॥

रुधिरैः पित्तवर्गैस्तु सैन्धवेनापि योजितम् ।
तद्भागास्तत्पुनः कृत्वा भागेनैकेन लेपितम् ॥ ६०१ ॥
पातयेत् नाडियन्त्रेण निषिञ्चेत् मधुसर्पिषा ।
तच्चूर्णं तद्रसे भूयो भागेनैकेन पातयेत् ॥ ६०२ ॥
पातितं पुनरेकेन संयुक्तं पातयेद् रसम् ।
एवं षट्पातितं शुद्धं भावयेत् क्षारमूत्रजैः ॥ ६०३ ॥
मद्याम्लरसपूर्वेण सङ्करं चारयेद् रसम् ।
काक्षीगैरिककासीसं शिलातुत्थं ससैन्धवम् ॥ ६०४ ॥
दरदं मात्रया दद्याद् रक्तवर्गरसेन तु ।
पलाशपुष्पं लाक्षा च कुसुम्भं रक्तचन्दनम् ॥ ६०५ ॥
माञ्जिष्ठा रोहिणी चैव पत्तङ्ग[1]रजनीद्वयम् ।
समङ्गायाश्च मूलानि साशोकाश्चरुदन्ति च ॥ ६०६ ॥
रक्तचित्रकमश्वत्थं रक्तपुष्पाश्च मूलिकाः ।
यथालाभं समाहृत्य जलद्रोणौ[2] विपाचयेत् ॥ ६०७ ॥
चतुर्भागावशिष्टं तु आढकं च समाहरेत् ।
ततस्तु तद्रसे क्षिप्य चारयेन्मर्दयेत् पुनः ॥ ६०८ ॥
रञ्जनं च सं[3] गृह्णाति वेधके च विशेषतः ।
तत्सर्वं पातितं लोहं कृष्टिशुद्धं शतांशके ॥ ६०९ ॥
द्रावयेदन्धमूषायां द्रुतं शीते निधापयेत् ।
तत्ताम्रं हेमसहितं निर्वहेद्धेमशेषितम् ॥ ६१० ॥
मारितं गन्धकेन्द्रेण स्विन्नमेवान्धमूषितम् ।
दशांशे हेमभागेन बीजकर्मविधानतः ॥ ६११ ॥
शतांशं वा यथाशक्त्या रञ्जितं बीजमुत्तमम् ।
चारयेद् द्रावणं मूल्या निष्ठीव्य च पुनः पुनः ॥ ६१२ ॥
संयुक्तं बहुलं पच्येद् दीपिकायां निधापयेत् ।
दीपोत्थितं द्रुतरसं समं पादमथार्धकम् ॥ ६१३ ॥

१. 'ङ्गं र' ख. पाठः. २. 'णे' क. पाठः. ३. 'नि' ख. पाठः.

